ISSN NO: 2278-6163

# शिक्षावाहिनी

VOL.10 ISSUE - 1

2020-2021

मुख्यसम्पादकः

प्रो. के.के.हर्षकुमारः

(विभागाध्यक्षः)

सम्पादकः

डा. विद्याधरः प्रभल

सहायकाचार्यः(शिक्षाशास्त्रविभागः)

सहसम्पादकः

डा. डि.वेणुगोपालरावः

सहायकाचार्यः(शिक्षाशास्त्रविभागः)

## शिक्षाशास्त्रविभागः




## केन्द्रीयसंस्कृतविश्वविद्यालयः

(संसदः अधिनियमेन स्थापितः)

( प्राक्तनं राष्ट्रियसंस्कृतसंस्थानम्, मानितविश्वविद्यालयः )

भारतसर्वकारस्य शिक्षामन्त्रालयाधीनः

गुरुवायूर् परिसरः, पुरनाट्टुकरा, तृश्शूर्

केरलम् -680551

| | | |
|---|---|---|
| **शिक्षावाहिनी** | | **SHIKSHAVAHINI** |
| **(VOLUME -10)** | | **(ISSUE – 1)** |
| **©ALLRIGHTS ARE RESERVED** | | **(JOURNAL IN EDUCATION)** |
| **ISSN** | **:** | **2278-6163** |
| **First Impression** | **:** | **2021** |
| **No. of Copies** | **:** | **150** |
| **Chief Editor** | **:** | **PROF. K. K. HARSHAKUMAR (H.O.D)**<br>**Professor in Education**<br>**Central Sanskrit University**<br>**Guruvayoor Campus, Trissur, Kerala -680551** |
| **Editor** | **:** | **Dr. VIDHYADHAR PRABHALA**<br>**Asst. Professor in Education**<br>**Central Sanskrit University**<br>**Guruvayoor Campus,**<br>**Puranattukara,Trissur, Kerala – 680551** |
| **Sub Editor** | **:** | **Dr.D.VENUGOPALA RAO**<br>**Asst. Professor in Education**<br>**Central Sanskrit University**<br>**Guruvayoor Campus**<br>**Puranattukara,Trissur, Kerala – 680551** |
| **Editorial Board** | **:** | **Prof. Ashok Kumar Kachwah**<br>**Prof. Ramachandrula Balaji**<br>**Prof. K. K. Shine**<br>**Dr. K. Giridhara Rao**<br>**Dr. Shyam Raj C.**<br>**Dr. Lalit Mohan Pantola** |
| **Typed by** | **:** | Dr. P.Vidhyadhar & Sri. Meenaketan Majhi |
| **Type Setting** | **:** | Dr. P. Vidhyadhar |
| **Cover Design** | **:** | Dr. Mahesh Kumar Panigrahi |
| **Published by** | **:** | Geedi Printers, Trissur, Kerala |

# सम्पादकीयम्

सम्प्रदायः, समानता, संस्कृतिः, सदाचारः, परम्परा- इत्येते विचाराः भारतीयानां जीवनव्यवहारे जीवप्रदाः भवन्ति । प्रत्येकं क्षेत्रे आदर्शाः प्रमाणभूताश्च एते विचाराः भारतीयरनुकृत्येषु दरीदृश्यन्ते । समस्तप्राणिकोटिजीवानाम् आधारभूता प्रकृतिः यथा सुखदुःखसंज्ञैः स्वयं सम्पोषिता वर्तते तथैव भारतीयजनतापि । सर्वकालसर्वावस्थासु प्रकृतिरियं स्वधर्मे स्वायत्ततां न त्यजति । तथैव स्वकर्तव्येषु व्यवहारेषु वा भारतीयजनता। विचारधारायामस्यां सुखदुःखसंज्ञैः कबलितेऽस्मिन् कोरोनाकालेऽपि परम्परा - सम्प्रदाय - शैक्षिकव्यावसायिकानां च प्रत्यक्षीकुर्वन्नयं शिक्षाशास्त्रविभागः **"शिक्षावाहिनी"** इति शैक्षिकवार्षिकप्रक्रियां प्रकाशयतीति मोमुद्यते मे मनः । संङ्कटपरिस्थित्यामस्यां विभागीयशिक्षकैः छात्राध्यापकैः च सम्भूय शोधलेखानां लेखने, सज्जीकरणे, मार्गदर्शने, व्यवस्थीकरणे, टङ्कणे, शुद्धीकरणे च महान् परिश्रमः विहितः । **डा. विद्याधरः प्रभल, डा. डि. वेणुगोपालरावः** इत्यनयोः अध्यापकयोः स्वकुशलप्रबोधनं सम्पादकयोगदानञ्चानुपमं श्लाघनीयं च वर्तते । शुभेऽस्मिन् सन्दर्भे विशेषतया तावभिनन्द्यौ एव । सुपथदर्शिका **"शिक्षावाहिनी"** इति शैक्षिकपत्रिका प्रत्यायनमाजीवनञ्च इत्थमेव सुगन्धेन सुपुष्पितो भूत्वा शिक्षालोकं सभाजयेदिति आशास्य भवतः बुधजनविधेयः ।

**प्रो. के. के. हर्षकुमारः**
**विभागाध्यक्षः**

# इह किञ्चित्

प्रपञ्चे स्थितेषु नाना राष्ट्रेषु ज्ञानविज्ञानसंस्कृतिसंस्कृतदृशा च भारतराष्ट्रं विशिष्टगुरुस्थानमावहति । वर्षमिदं ऋषीणां पुनराद्यानां मुनीनां कवीनाञ्च प्रतीकस्थलमस्ति । प्रपञ्चाय आहारव्यवहारजीवनचिन्तनशैलीः च प्रथमतया परिचयमकार्षीत् देशोऽयम् । ऋग्वेदानुसारं षड्सहस्रवर्षेभ्यः पूर्वमेव इतिहासः अस्य समारब्धः इति लोकविदितमेव । वेदवेदाङ्गसंहितारण्यकोपनिषद्ब्राह्मणपुराणेतिहासपद्यगद्यकाव्यादीनां सर्वा लिपिः गीर्वाणमयीति विदितविषयः एव । साम्प्रतं सर्वलोकः संस्कृतभाषायाः विषये चिन्तनं समारब्धम् । संस्कृतनिष्ठविज्ञानविषये पुनः विचारः आरब्धः । अत्र विशिष्टं ज्ञानं विज्ञानम् । गैर्वाण्यां विद्यमानशास्त्राणि सर्वाण्यपि विज्ञाननिष्ठान्येव । भारतीयज्ञानं विज्ञानसमुच्चयमेव । वैदिकवाङ्गमये शब्दस्यास्य नानार्थेषु व्यवहारो दृश्यते । तद्यथा -

**यो विज्ञाने तिष्ठन्विज्ञानादन्तरो यं विज्ञानं न वेद यस्य विज्ञानशरीरं यो ।**
**विज्ञानमन्तरो यमयत्येष स आत्मार्याम्यमृतयः।। (बृह.उ – 3/7/22)**

तच्च विज्ञानं नानाप्रकारेभ्यः प्राप्यते । मानवं विकासपथि नयति शिक्षैवेति सुधयः भणन्ति । शिक्षा नाम अन्तर्निहितशक्तीनां बहिरानयमिति विदितमेव । शिक्षाशास्त्रेऽस्मिन् छात्राध्यापकानाम् अधीतज्ञानस्य कथं सङ्क्रमणं कुर्यादिति कौशलात्मकप्रशिक्षणमत्र प्रदीयते । प्रशिक्षणक्षेत्रेऽस्मिन् चतुर्णां भाषाकौशलानां तथा प्रमुखतया पञ्चानां शिक्षणकौशलानाञ्च प्रशिक्षणं दीयते । छात्राध्यापकाः रङ्गेऽस्मिन् अभिव्यक्तिकौशलपुरस्सरं संरचनाकौशलेऽपि सामर्थ्यं वर्धयन्ति । प्रत्येकं छात्राध्यापकः, छात्राध्यापिका च शिक्षणकौशलैः सह आजीविकासम्पादकौशलान्यपि समार्जयन्ति । अतः अधीतशास्त्राणां, तथ्यानां सुष्ठु सम्प्रेषणं कुर्वाणः औद्योगिकक्षेत्रेऽपि स्वावसरान् प्राप्य जीवने उत्तमोपलब्धिं प्राप्नुवन्ति ।

संस्कृतशास्त्ररक्षणं, संस्कृतभाषायाः प्रसार-प्रचारः, नानाकोणेषु संस्कृतशिक्षायाः अध्यापनं च भवेदिति सङ्कल्पमुररीकृत्य केन्द्रीयसंस्कृतविश्वविद्यालयः स्थापितः (प्राक्तन रा.सं.सं.) वर्तते । प्रत्यायनमिव आयनेऽस्मिन् शिक्षासंबद्धवार्षिकी शैक्षिकपत्रिका वर्षेऽस्मिन्नपि मुद्रीयते । पत्रिकायामस्यां विभागीयाध्यापकानां शैक्षिकशोधप्रबन्धाः, छात्राणाञ्चालेखाः वर्तन्ते । ते शिक्षाजगतः मङ्गलाय भवेयुरिति कामयामहे ।

पत्रिकायाः अस्याः सफलतायै प्रतिपदं मार्गदर्शनं कृतवद्भ्यः विभागीयाध्यक्षेभ्यः **प्रो. के. के. हर्षकुमारवर्येभ्यः**, प्रबन्धानां संशोधनायोपकृतवद्भ्यः **प्रो. अशोककुमारकच्छवाहवर्येभ्यः, प्रो. आर्. बालाजीवर्येभ्यः, प्रो. के. के. शैन् वर्येभ्यः, डा. के. गिरिधरराववर्येभ्यः, डा. सि. श्यामराजवर्येभ्यः, डा. ललितमोहनपन्तोलावर्येभ्यः** च धन्यवान् समर्पयावहे । पत्रिकायाः सुचारुमुद्रणे सहाय्यं कृतवद्भ्यः समेभ्यः मनसा धन्यवादन् वितन्वः ।

इत्थम्
सम्पादकौ
**डा. प्रभल विद्याधरः**
**डा. डि. वेणुगोपालरावः**

# शुभाशंसा

शिक्षां वोढुं शीलमस्या इति, वाहिनीति ताच्छील्ये णिनिप्रत्ययं विधाय व्युत्पादितः शिक्षावाहिनीशब्दः। विशेषणवाचकशब्दः पत्रिकेति तस्याः विशेषणान्तरं वार्षिकीति। एवमियं शिक्षावाहिनी वार्षिकी पत्रिकास्ति, या केन्द्रीयसंस्कृतविश्वविद्यालयान्तर्गतस्य गुरुवायूर् परिसरस्य शिक्षाशास्त्रविभागात् प्रकाश्यते।

शिक्षापदमनेकेष्वर्थेषु प्रयुक्तमपि वेदाङ्गे रूढमस्ति । अथ शिक्षां व्याख्यास्यामः इति बहुश्रुतं वाक्यमस्ति। तत्रास्माभिराचणीयानां सुभाषितानामवलिरस्ति । यथा – स्वाध्यायप्रवचनाभ्यां न प्रमदितव्यम् । पितृदेवो भव। आचार्यदेवो भव। मातृदेवो भव। प्रायेण न कोऽपि जानाति पितृदेवो इति पदं बहुव्रीहिरिति – पिता देवो यस्य स इत्यत्र विग्रहवाक्यम्।

शिक्षापदस्याध्यापनमित्यर्थः वर्तते, अत एव शिक्षकोऽध्यापको जातः। किन्तु प्रकृतानुसारेण विद्येति गृह्णीमः, यां वहति – शिक्षावाहिनी। विद्यायामपीयत्ता नास्ति – तदुक्तं नैषधे नलप्रशंसप्रस्तावे -

**अमुष्य विद्या रसनाग्रनर्तकी त्रयीव नीताङ्गगुणेन विस्तरम्।**
**अगाहताष्टदशतां जिगीषया त्रयीव वेदाङ्गगुणेन विस्तरम् ॥ (नै. -1/5)**

अत्राष्टादशविद्याः स्मृताः। ताः यथा -

**अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।**
**धर्मशास्त्रं पुराणञ्च विद्यास्त्वेता चतुर्दश॥**

अपि च **आयुर्वेदो धनुर्वेदो गान्धर्वश्चार्थशास्त्रकम्** इति । एतदतिरिच्यचतुषष्टिकलाः सन्ति । अन्याश्च बह्व्यो यत्र जैन – बौद्ध – चार्वाकशास्त्राणि नान्तर्भूतानीमान्यप्यत्रैव भुवि भूतानि। इमानि सर्वाणि विद्यास्थानानि ऋषिभिः ऋषिकल्पैः दृष्टानि स्वार्थनिरपेक्षतया लोकोपकाराय प्रकल्पितानि । तेषामाचार्याणां स्मरणं विधीयते चेत्तत्पुण्यदमिति मे मतिः। अयमस्तु नस्सङ्कल्पः – यथा –

**भद्रं कर्णेभिः शृणुयामदेवाः**
**भद्रं पश्येमाक्षभिर्यजत्राः।**
**स्थिरैरङ्गैस्तुष्टुवांसस्तनूभिः**
**व्यशेम देवहितं यदायुः। ( ऋग्वेद – मंडलं – 1,सूक्तं – 89,मन्त्रः – 8)**

ऐषमः शिक्षावाहिन्यां शिक्षाशास्त्राचार्यवर्यैः नानाविषयेषु लिखिताः प्रबन्धामतल्लिका वर्तन्ते। याः गुरुवायूर् परिसरस्य कीर्तिमाभारतं प्रसारयितुं समर्था भवन्ति। अपि चात्र शिक्षाध्यापकच्छात्रैरपि व्युत्पत्तिप्रदाः निबन्धाः लिखितास्तेऽपि तत्र सहयोगिनो भवेयुः।

अत्र शिक्षाशास्त्रविभागाध्यक्षाणां श्रीमतामाचार्याणां के. के. हर्षकुमारमहोदयानामितरेषाञ्च प्रयत्नः फलेग्रहिर्जात इति निश्चिनोमि। पत्रिकेयं विदुषां सहृदयानाञ्च मनसि किमप्यानन्दं विदधातु।

**इत्थम्**
**बुधजनविधेयः**

**प्रो. ई.यम्. राजन्**
**निदेशकः**

# चित्राणि



**Prof. P. N. Sastry**
**(Vice Chancellor)**



**Prof. S.Subrahmanya Sarma**
**( REGISTRAR )**



**Prof. E.M Rajan**
**(DIRECTOR)**

# विभागीयाध्यापकाः



**Prof.K.K.Harshakumar**
**(Head of The Department)**



**Prof. Ashok Kumar Kachwa**
**(Professor)**




**Prof. Ramachandrula Balaji**
**(Professor)**



**Prof.K.K.Shine**
**(Professor)**



**Dr.K.Giridhara Rao**
**(Asst. Professor)**



**Dr.D.Venugopaala Rao**
**(Ast. Professor)**



**Dr. P. Vidhyadhar**
**(Asst. Professor)**



**Dr. Shyamraj C**
**(Asst. Professor)**



**Dr. Lalith M. Pantola**
**Asst. Professor (Guest)**

# विभागीयकर्मचारिणौ



**Smt. Vijayakumari**
**Assistant (Accounts)**



**Sri. Vineesh. P.V**
Peon (Adhoc)

# विषयानुक्रमणिका

# अधिगमस्य आयामा: स्तराश्च

**Prof. Ramachandrula Balaji**
**Prof. in Education**
**Central Sanskrit University**
**Guruvayoor Campus, Trissur,**
**Kerala**

अधिगमस्य आयामा:

परिशोधकै: सैद्धान्तिकैश्च अधिगमप्रक्रियाया: निर्वचनाय अधिगमदिशि प्रवर्त्तनाय च केचन आयामा: अङ्गीकृता: वर्तन्ते । अधिगमे साफल्यसम्पादनाय एते पञ्चायामा: अत्यन्तावश्यका: वर्तन्ते ।अधिगमविषये केन्द्रीकृतचिन्तनाय, अधिगमप्रक्रियाया: अध्ययनाय, बोधनाधिगमप्रक्रियाया: मूल्याकलनाय, पाठ्यचर्याया: अनुदेशनस्य मूल्याकलनस्यच योजनां कर्तुम् एतेआयामा: उपयुक्ता: भवन्ति -

**१. अभिवृत्तय: प्रत्यक्षञ्च (Attitudes and perceptions)**

अधिगमसामर्थ्यानां प्रभावोत्पादने अधिगमकौशलानाञ्च विकासे अभिवृत्तय: प्रत्यक्षञ्चबहु योगदानं कुर्वन्ति। उदाहरणार्थं यदि छात्र: कक्षां भद्रताभावरूपेण क्रमरहितरूपेण चिन्तयति, तदाधिगमं प्राप्तुं न शक्नोति। एवमेव छात्राणां कक्षाकार्यविषये कक्षासमस्यानां विषये च ऋणात्मकाभिवृत्ति: भवति चेद्स मस्यानां परिहारे प्रयत्नमपि न कुर्वन्ति, तदानीमुत्तम: प्रभावोत्पादकानुदेशनं छात्राणां कृते कक्षाविषये अधिगमे च धनात्मकाभिवृत्तिं प्रापयितुम् उत्तमप्रत्यक्षाय च साहाय्यं करोति । अतः अध्यापकैः छात्रेषु धनात्मकाभिवृत्तिसम्पादने प्रयासः कर्त्तव्यः।

**२. ज्ञानार्जनं समाकलनं च ( Acquire and Integrate Knowledge)**

नूतनज्ञानार्जनसमये छात्र: पूर्वज्ञानेन साकं नूतनज्ञानं योजयित्वा चिन्तयति चेद् नूतनज्ञानस्य उत्तमव्यवस्थीकरणं भवति। तेन – (i) प्राप्तं ज्ञानं चिरं तिष्ठति। (ii) प्राप्तस्य ज्ञानस्य उत्तमव्यवस्थापनञ्च भवति।

अत: अध्यापकैः नूतनविषयबोधनसमये आवश्यकं मार्गनिर्देशनं कर्तव्यं भवति । नूतनतया सम्प्राप्तकौशलानां प्रक्रियाणां वा अनुकूलरूपेणपरिवर्तनं कृत्वा तद्विषयकं सम्पूर्णं ज्ञानं सम्प्राप्य पुन: निष्पादनप्रक्रिया एव अन्तरीकरणप्रक्रिया (समाकलनप्रक्रिया - Integration) भवति।

**३. ज्ञानविस्तृति: संस्कृतिकरणञ्च (Extend and Refine Knowledge)**

ज्ञानार्जनेन ज्ञानसमैक्यतासम्पादनेन वा अधिगम: नैव स्थगनीय: । ज्ञानविस्तृतिद्वारा संस्कृतिकरणद्वारा च गभीरावबोधाय प्रयास: कर्तव्य:।

तदर्थं काश्चन चिन्तनप्रक्रिया: उपयुक्ता: भवन्ति -

- तुलनम् (Comparing)
- वर्गीकरणम् (Classifying)

- मूर्तिकरणम् (Abstracting)
- आगमनविवेचनम् (Inductive Reasoning)
- निगमनविवेक: (Deductive Reasoning)
- संरचनात्मक: सम्बन्ध: (Constructive Support)
- दोषविश्लेषणम् (Analyzing Errors)
- विश्लेषणदृष्टि: (Analyzing Perspective)

**४. ज्ञानस्य सार्थकविनियोग: (Use Knowledge Meaningfully)**

समर्थरूपेण ज्ञानस्य प्रयोगः अत्र भवति। प्राप्तस्य ज्ञानस्य युक्तेषु सन्दर्भेषु अर्थवत्विनियोग: अत्र भवति। The most effective learning occurs when we use knowledge to perform meaningful tasks. अत्र प्राप्तस्य ज्ञानस्य सार्थकतारूपेण संरचनायै षट् चिन्तनात्मकप्रक्रियाः वर्तन्ते -

- निर्णयस्वीकरणम् (Making Decisions)
- समस्याया: परिहार: (Solving Problems)
- नूतनाविष्करणम् (Invention)
- परिशोधनम् (Investigation)
- प्रायोगिकविचारणा (Experimental Enquiry)
- व्यवस्थाविश्लेषणम् (System Analysis)

**५. मनस: शीलोत्पादकता (Productive Habits of Mind)**

उत्तमाधिन्ता उत्तमप्रवृत्तीनां विकासमाप्नोति। The most effective learners have developed powerful habits of mind that enable them to think -

- Critically - विमर्शनात्मकरूपेण
- Creatively - सर्जनात्मकरूपेण
- Self Regulated Thinking - आत्मनियन्त्रणचिन्तनम्

सर्वेषां जनानामस्मिन्स्तरे प्रवृत्ति: नैव भवति।

**मनस: प्रभावोत्पादकशीलानि एतानि भवन्ति -**

**A - विमर्शनात्मकचिन्तनम्**

- यथार्थरूपेण भवति व्यंयथार्थान्वेषणञ्च कर्तव्यम्। Be accurate and seek accuracy.
- निर्मल: स्यात्स्पष्टताया: अन्वेषणञ्च स्यात्। Be clear and seek clarity .

- पारदर्शिकता स्यात् । Maintain an Open Mind.
- उद्वेगानां नियन्त्रणम् । Restrain impulsivity .
- स्थिते: समर्थने सिद्धैर्भाव्यम् ।Take a position when the situation warrants it.
- अन्येषां भावानां ज्ञानस्तराणाञ्च अनुरूपेण प्रतिस्पन्दनमावश्यकम् । Respond appropriately to others feelings and level of knowledge.

**B - सर्जनात्मकचिन्तनम्**

- दृढाभिनिवेश: । Persevere.
- ज्ञानस्य सामर्थ्यानाञ्चपरिमितय: हर्तव्या: । Push the limits of your knowledge and abilities.
- स्वीयमूल्याङ्कनस्तराणामुत्पादनं विश्वसनीयतासम्पादनं निर्वहणञ्च । Generate, Trust and maintain your own standards of evaluation.
- साम्प्रदायिकविधिभ्य: अतिक्रान्ततयापरिस्थितीनां निरीक्षणद्वारा नूतनमार्गाणामुत्पादनम् । Generate new ways of viewing a situation that all outside the boundaries of standard conventions.

**C - आत्मनियन्त्रणचिन्तनम्**

- स्वकीयचिन्तनानां परीक्षणम् । Monitor your own thinking .
- उचितरूपेण योजनानिर्माणम् । Plan appropriately.
- अपेक्षितस्रोतसां परिचायनमुपयोगश्च । Identify and use necessary resource .
- प्रतिपुष्टे: अनुरूपप्रतिस्पन्दनम् । Respond appropriately to feedback.
- आत्मन: क्रियाणां प्रभावोत्पादकताया: मूल्याङ्कनम् । Evaluate the effectiveness of your actions.

**अधिगमस्तरा: -**

अधिगमः एका दैनन्दिनप्रक्रिया भवति । अधिगमप्रक्रियाया: उत्तमाधिगमनेन अस्माकं चिन्तनानां पुनस्संरचना उत्तमरूपेण भवितुमर्हति । The better you understand the learning process the better you will be able to use this understanding in the redesign of your organization.

१. **तथ्यानि (Facts)** – परिशोधनद्वारा साक्षात्निरीक्षणद्वाराफलितांशरूपेण प्राप्तानां विवरणानां तथ्यानां वाविचार: अस्मिन्स्तरे भवति । The first level of learning deals with facts details or data

which result from direct observation and research. एतेषां साक्षादुपयोग: न भवति परन्तु, एतद्विना अनन्तराधिगमस्तरं प्रति नैव गमनं भवति।

२. **समाचार: / सूचना (Information)** - प्राप्तदत्तांशानां प्रयोगस्तर: अत्र भवति । The second level of learning deals with information and observational data in a usable form. अत्र समाचारसम्बद्धप्रश्नाः एवं भवन्ति – कः, कीदृशः, कथम्, कति, कुत्र (who, what, when, where, how Many ) इत्यादीनां प्रश्नानां समाधानमत्र भवति । अनेन पूर्वप्राप्तानां तथ्यानामुपयोगं कर्तुं शक्यते ।

३. **कथं ज्ञातव्यम् (Know-how)** - लब्धसमाचारस्य उपयोग: कथं कर्तव्य: इति अनुदेशनमत्र भवति । Know-how consists of a collection of descriptions in the form of instructions. अत्र अस्माकम् अनुभवेनज्ञानोत्पत्ति: भवति ।

४. **अवधारणा (Comprehension)** - अस्मिन् स्तरे किमर्थम् (Why) इत्यस्य अवबोधनात्मकमुत्तरं भवति । अस्मिन्स्तरे व्याख्यानानां निबन्ध: भवति । The fourth level of learning is composed of explanations . उपरि विद्यमानद्वयो: स्तरयो: उपयोग: अनेनैव भवति ।

५. **विवेक: (Wisdom)** - अधिगमस्तरे अयमन्तिमोस्तर: भवति ।
मूल्यानां सममेलनेन तेषां मूल्याङ्कनसामर्थ्यमत्र भवति ।अधिगमविकासे अयं स्तर: अत्यन्तावश्यक: वर्तते । विवेकं विनाकथं
ज्ञातव्यम्, अवधारणा (Know-how, Comprehension) इत्यनयो: द्वाराप्राप्तफलस्य व्यवस्थापनं नैव कर्तुं शक्यते |



# रामायणे सामाजिकतत्त्वानि

**प्रो. के.के. हर्षकुमारः**
आचार्यः, शिक्षाशास्त्रविभागः
केन्द्रीयसंस्कृतविश्वविद्यालयः, गुरुवायूर् परिसरः।

जम्बुद्वीपस्य पार्श्वत्वेन विराजमाने भारतखण्डस्य वैशिष्ट्यं राज्यान्तरानपेक्षया वरीवर्त्तीति लोकसम्मतं क्रार्यम्। किन्तु भारतीयेषु अधिकाः तेषां राज्यस्य महत्त्वं ज्ञातुं प्रयत्नं न कुर्वन्ति। स्वमातृभूम्यां विद्यमानसंस्कृतेः प्रमुखस्थानं न कल्पयन्ति च। ते सर्वदा सनातनसंस्कारं परित्यज्य वैदेशिकपाश्चात्यसंस्कारे सहमतिं प्रकट्य्य तस्य अशुद्धांशस्य अनुकरणं कुर्वन्ति परं स्वकीयसंस्कारस्य निन्दां कर्तुम् अहमहमिकया अग्रेसराश्च भवन्ति । भारतेतरराज्यानि अवलोकयति चेत् अवगन्तुं शक्यते यत् वयं भारतीया एव वैदेशिकसंस्काराचरणे अधिकश्रद्धालवाः भवेम इति।

भारते दृश्यमान - इदानीन्तनशिक्षासंप्रदायः 1854 तमे क्रिस्त्वब्दे Woods Despatch द्वारा समारब्धा आसीत् इति सर्वे जानन्ति एव । किन्तु ततः पूर्वम् औपचारिकशिक्षा-नासीत् इति कथं वदेम? अनेकाः सर्वदा वदन्ति भारते विदेशात् आगत्य, पुरातनकाले अस्माकं विश्वविद्यालयेषु विद्यार्जनं कुर्वन्ति स्म इति। आधुनिकाः इतिहासकारोऽपि तमेवांशं समर्थयन्ति कथयन्ति च । यद्यपि पुरातनकाले भारतं शिक्षाया आदानप्रदाने महत्तरं स्थानं आवहन्ति स्म, तथापि भारते या शिक्षा साम्प्रदायिकरूपेण प्रचलन्ती आसीत् तामधिकृत्य अजानन्नपि अधुना वयं वैमुख्यं प्रकटयामः।

वैदिककालीनशिक्षायां महत्त्वमस्ति चेदपि बौद्धकालीनशिक्षया एव शिक्षायाः महत्त्वम् अत्यन्तमवाप्तम्। तस्य निदर्शनमेव तक्षशिला, नलन्दा, जगद्दला प्रभृति विश्वविद्यालयाः भवन्ति । सर्वदा आधुनिके काले विद्यालयेषु पौनःपुन्येन तक्षशिला, नलन्दा इति उद्घोषयन्ति चेदपि, तेषां स्थापनं बौद्धाः कृता इति कदापि वयं न वदामः । अनेन प्रकारेण भारते या परम्परा वर्तते तेषां पुनरानयनाय किं कर्तुं शक्नुयाम इति चिन्तायां सत्यां प्रथमम् अस्माकं पूर्वजैः शिक्षायाः कृते दत्त-श्रद्धां प्राधान्यं तथा सामाजिकजीवनस्य प्रकारान् च वाल्मीकिरामायणद्वारा अवगन्तुमेव अस्य लेखनस्योद्देश्यः भवति।

अत्र स्थालीपुलाकन्यायेन वाल्मीकिरामायणे समाजः कथमासीदिति किञ्चित् अवलोकयामः । आदिकाव्यं भवति रामायणम् । वाल्मीकिमहर्षेः कण्ठं भित्वा समागतैः शब्दपल्लवैः प्रफुल्लितं काव्यं भवति रामायणम्। भारतस्य मुनयस्सर्वे समाजहितैषिण आसन्। अत एव कस्यचन पक्षिणः निषादहनने सत्यपि तस्य शोकात् उत्पन्नेन श्लोकेन रामायणस्य आरम्भो अभूत्। यथा-

**मानिषाद प्रतिष्ठां त्वमगमः शाश्वती समाः ।**
**यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्॥**

अनेन मुनिवचनेन भारतीयाः न केवलं मानवानाम् अपि तु पशुपक्षीणामपि आत्मैव स्थानमकल्पयत् इति। अर्थात् अधर्मस्याचरणं यस्य-कस्याप्युपरि वा भवतु तस्य स्थानं शाश्वतं न भवति । एवं समाजहितं काङ्क्षमाणाः भारतीया आसन्। अत एव रामायणं आधुनिककालेऽपि जनहृदयेषु तिष्ठति।

भारते विद्यमानासु भाषासु रामकथाः वर्णिताः इत्यनेन जनहृदयेषु रामायणस्य उन्नतं शाश्वतं स्थानमस्तीति विनाशङ्कां वक्तुं प्रभवामः । न केवलं भारते अपि तु चैना, रष्या इन्तोनेष्या, कम्बोडिया, राज्येषु तत्तद्देशानुगुणं रामायणकथाः उपवर्णिताः सन्ति । एतादृशे रामायणे विद्यमानानि कानिचन तत्वानि अत्र प्रतिपादयितुमुत्सहे ।

**सामाजिकभाषा संस्कृतम् -**

यद्यपि भारतस्य व्यवहारभाषा साप्रतं न संस्कृतं, तथापि रामायणस्य रचनाकाले सामान्यजनानां भाषा संस्कृतमासीत् इत्यनुमातुं सारल्यमस्ति । श्रीरामचन्द्र अयोध्यायां जनिं प्राप्य पितुः वाक्यपालननिमित्तं वनमगच्छत् । तदानीं श्रीरामचन्द्रः हनुमतः वाक्यं श्रुत्वा इत्थमुवाच-

**नानृग्वेदविनीतस्य न यजुर्वेदधारिणः**
**नासामवेदविदुषः शक्यमेवं विभाषितुं ।**
**न्यूनं व्याकरणं कृत्स्नम् अनेनबहुधा श्रुतं**
**बहुव्याहरतानेन न किञ्चिदपशब्दितम् ॥**

अस्मिन् अवैदिकानां अर्थात् वेदानामनध्येतृणां शुद्धसंस्कृतभाषया भाषणं कष्टतमं कार्यमिति कथितम् । पुनः हनुमान् वैय्याकरण इत्यपि लक्ष्मणं स्मारयति । संस्कृतं सामाजिकभाषा न अभविष्यत् चेत् सुग्रीवामात्यः हनुमान् उपरि प्रदर्शितगुणोपेतभाषया भाषणमकार्षीदिति इति कविना वाल्मीकिना न चिन्तितम् । पुनश्च उत्तरभारते तथा दक्षिणभारते श्रीलङ्कायां च संस्कृतेन व्यवहारो आसीदिति हनुमतः भाषया वाल्मीकिः ज्ञापयति । यथा-

**यदि वाचं प्रदास्यामि द्विजातिरिव संस्कृतम् ।**
**रावणं मन्यमाना मां सीता भीता भविष्यति ॥**

अनेन श्लोकेन रावणस्यापि व्यवहारभाषा संस्कृतमासीदिति अनुमातुं शक्यते । एवं सुरससुबोधायाः विश्वमनोज्ञायाः संस्कृतभाषाया आविर्भावः अनादिकालादेव इत्ययमंशः न निराधारः । सामाजिकभाषा आसीदिति सुस्पष्टमेव ।

**रामायणकालस्य समाजः -**

त्रेतायुगकालः कृतयुगानन्तरं तथा द्वापरयुगस्य पूर्वम् इति प्रथितमेव । तदानीन्तनकालः साम्प्रदायिक इति कथा पठनेन अवगम्यते । तस्मिन् समाजे वैविध्यपूर्णाः जनाः आसन् । यद्यपि राजवंशः सर्वथा उन्नततले भवन्ति, तथापि सामान्यजनानां कल्याणे ते श्रद्धालवाः आसन् । जनाः एकैकोऽपि प्रत्येकं स्वस्मिन् धर्ममवलम्ब्य कार्यनिरताश्च आसन् । आदिवासिनां राजा भवति गुह इति अयोध्या काण्डे कथितम् । तैस्सह रामसम्बन्धः श्रीरामगुहयोश्च व्यवहारः समाजे या व्यवस्था आसीदिति बोधयति । पुनः श्रीरामचन्द्रस्य सामान्यजनानां प्रति व्यवहारेणापि तदानीन्तनभाषा सामाजिकजीवनञ्च महर्षिणा प्रदर्शितम् । पञ्चवट्यां मुनिभि अर्थात्, ये साधवः सन्ति तेभ्यः कीदृशं महत्त्वं श्रिरामचन्द्रः, सीता तथा लश्रमणश्च प्रदर्शितवन्त इति अधुनातनलोकः पठित्वा स्वं वशीकर्तव्यः ।

राजपालनमासीत् तथापि धर्मगुरूणां स्थानं महत्त्वपूर्णं कल्पितमासीत् । यदा राजसन्निधौ विश्वामित्रस्य आगमने सति साक्षात् राजा स्वयमुत्थाय स्वागतं करोति । अधिकारेण राजा अहङ्कारी न भवेदिति इदम् उद्बोधयति । राज्ञः धर्मः स्ववाक्यपालनमेव अन्यत् सर्वं द्वितीयं भवति यथा -

**प्रतिश्रुत्य करिष्येति उक्तं वाक्यमुपकुर्वति ।**
**इष्टापूर्तवधो भूयात् तस्मात् रामं विसर्जय ॥**

भारतसम्प्रदाये इष्टापूर्तिकर्मणा मोक्षप्राप्तये तथा शान्तिपूर्णजीवनाय च अधिकं महत्त्वं कल्पयन्ति । प्रदत्तस्य वाक्यस्य पालनं महत्त्वपूर्णं भवति जीवने इति, लोकानुद्दिश्य विशिष्टवाक्येन वाल्मीकिरुपदिश्यते । राज्ञः धर्म इत्थं भवेदिति सूचयति-

**नृशं समनृशं सं वा प्रजारक्षणकारणात् ।**
**पातकं वा सदोषं वा कर्तव्यं रक्षता सदा ॥**

प्रजारक्षणाय पापिनम् अपापिनं वा दण्डयितुं राजा प्रतिबद्ध एव । तेषां पापकर्म तथा पातकमपि प्रजारक्षणायभवति । ताटका-वधेनापि श्रीरामः स्वयं पातकी न भवति, किन्तु तदापि समाजकल्याण-निमित्तं भवति । एवं प्रजारक्षणाय राजा सर्वदा तत्परः तथा जागरूकः भवेदिति वाल्मीकिः अस्मान् बोधयति । कालेऽस्मिन्नपि रामायणस्य अत्यन्तप्रसक्तिरस्तीति पिपठिषवः ज्ञातुं शक्नुवन्ति ।

एवं बहवोंऽशाः समाजमुररीकृत्य वाल्मीकिना सरलभाषया रामायणे तत्र तत्र उपदिष्टम् । मनोवैज्ञानिकविषयाः, दार्शनिकविषयाः, सामाजिकविषयाः च प्रत्येकं सर्गेषु गुम्फिताः वर्तन्ते । विस्तरभयात् एतावत् उक्त्वा विरमामि । शुभं भूयात् इत्याशास्ये ॥



# भगवद्गीतायांपर्यावरणशिक्षासङ्कल्पाः

**डा. डि. वेणुगोपालरावः,**
सहायकाचार्यः, शिक्षाशास्त्रविभागः,
केन्द्रीयसंस्कृतविश्वविद्यालयः, गुरुवायूर् परिसरः।

पुनीतेयं भारतभूमिः। भारतभूमिरियं भगवत्या, भगवता, भगवद्गीतया च भूषिता पोषिता पालिता च वर्तते। विश्वापेक्षितज्ञाननिधिं तथा भूभारञ्च सर्वं सहमाना भारतभूमिरियं यथार्थतया सर्वंसहैव जेगीयते।सर्वंसहेति कथ्यमानेयं भारतभूमिः समस्तविषयेषु विश्वगुरुस्थानमवाप्य चराचरस्थावरजङ्गमादीनां समस्तजीवविशेषाणां कृते मातेव व्यवहरति। अस्याः भारतभूमेः मानसपुत्रिका भवति सुसंस्कृता संस्कृतभाषा। अत एव अस्याः अपरं नाम भवति भारतीति। अनया भारत्या, भगवता श्रीकृष्णेन च विश्वजनकल्याणाय संसृष्टा निर्दिष्टा च भवति भगवद्गीता। इयं भगवद्गीता **यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचिदिति** वेदव्यासोक्त्यनुसारं समस्तवैश्विकविषयमूल्याकलने सार्थकी, निरुपमा चाद्वितीया भवति। अत एव अधुनामुं ग्रन्थरत्नं वैश्विकादर्शग्रन्थत्वेन घोषणमप्यकुर्वन् श्रेष्ठविदः। निगूढान् लौकिकालौकिकविचारान् सर्वानपि स्वगर्भे निक्षिप्य, अत्यन्तसरलया भारत्या पुरुषोत्तमकथनानीति चराचरजैविकविषयान् लोकार्पणं करोतीयं भगवद्गीता। तेषु पर्यावरणविचारः अपि निगूढः अन्यतम एव भवति। **प्रकृतिरिति** पदं समुपयुज्य नैकानि कथनानि तत्क्षेत्रदिशा निर्दिष्टानि भगवता भगवद्गीतायामेव। कथ्यते हि यत् –

**प्रकृतिं पुरुषं चैव क्षेत्रं क्षेत्रज्ञमेव च ।**
**एतद्वेदितुमिच्छामि ज्ञानं ज्ञेयं च केशव ।।(भ.गी.13.1.)**

इत्थं लोककल्याणाय निगूढाः प्रकृतेः पर्यावरणस्य वा सुस्थिरताविचाराः श्रीमद्भगवद्गीतायां सङ्कल्पितास्सन्तीति अभिज्ञायते। प्रकृतिपुरुषौ द्वावपि परस्पराधारभूतौ भवतः। द्वयोर्मध्ये एकं विना नान्यस्यास्तित्वं सिद्ध्यति। एतयोः प्रकृतिपुरुषयोः द्वयोः ज्ञानमत्यावश्यकं भवति। क्षेत्रं किम्? , क्षेत्रज्ञः कः?, किं ज्ञानम्?, किम् ज्ञेयम्? इति अर्जुनेन प्रश्नकरणावसरे अच्युतेन प्रदत्तानि अनुदेशनानि सर्वाणि प्रकृतिपुरुषोपकारकाणि एव। एतेषां कथनानां सारः प्रकृत्याधारितैः अस्माभिः मानवैः निश्चितरूपेण ज्ञातव्य एव।

**भगवद्गीतायां पर्यावरणस्य अन्योन्याश्रयमौलिकविचाराः** -

संसारे अस्मिन् दृश्यमाना प्रकृतिः तथा च तदन्तर्गतानि चराचरस्थावरजङ्गमादीनि एव पर्यावरणस्य यथार्थभूतानि। अनयोः प्रकृतिसमाजयोः समाहारः एव पर्यावरणमिति नाम्ना कथ्यते। अस्मान् परितः विद्यमानं पर्यावरणमिति कथनेन दृष्टिगोचरं सर्वं समायाति एव। एतौ द्वावप्यंशौ परस्परप्रचोदकौ, प्रेरकौ, पोषकौ, आधारभूतौतथा च नियन्त्रकौ भवतः। तदेव कथ्यते भगवद्गीतायां यथा –

**प्रकृतिं पुरुषं चैव विद्ध्यनादी उभावपि।**
**विकारांश्च गुणांश्चैव विद्धि प्रकृतिसम्भवान्।।** इति। (भ.गी.13.19)

अनेन सुस्पष्टायते यत्- प्रकृतिः तदन्तर्गतसर्वभूतांशः सर्वश्चेति उभावापि मिलित्वैव पर्यावरणमिति। अनयोः द्वयोः गुणाः विकाराः वा निश्चितरूपेण संसारस्य समाजस्य वा सुस्थिरतायै कारणभूताः इति भगवद्गीतायां भगवताह। प्रकृत्या सह मानवस्य सम्बन्धः न साम्प्रतिकः, अपि चानादिकालादेव वर्तत। यथा प्रकृतिमनुसरति मानवः तथैव प्रकृतिः मानवं संरक्षति इति वैज्ञानिकः विचारः अत्र प्रस्फुटितो भवति। अनयोः द्वयोः विकाराः

गुणाः वा स्वभावजाः एव सन्ति। तथापि प्रकृतेः स्वभावतः यानि विकृतकार्याणि सम्भवन्ति, तानि तु स्वतस्सिद्धानि एव भवन्ति। तथापि प्रकृतिः पुनर्नवेव पुनः स्वशक्त्या सर्वं मानवाय कार्यं विधास्यति। परन्तु मानवस्य स्वभावतः यानि विकृतकार्याणि सम्भवन्ति, तानि तु मानवेनैव अनुभोक्तव्यानि भवन्ति। प्रकृतिः तत्र निर्बला सञ्जायते। प्रकृतेः अर्थात् पर्यावरणविषये मानवेन दुर्बुद्ध्या क्रियमानानि कार्याणि तेनैव अनुभोक्तव्यानि भवन्ति। तदा पुनः प्रकृतेः एव समाराधकः भवेन्मानवः। इह प्रकृतिपुरुषयोः द्वयोरपि विकारत्वं तथा गुणत्वं च संसूच्यते।

**सत्त्वं रजस्तम इति गुणाः प्रकृतिसम्भवाः।**
**निबन्धन्ति महाबाहो देहे देहिनमव्ययम्।। (भ.गी 14.5) इति।**

इत्थं गुणास्तु सत्त्वरजस्तमाश्चेति त्रिधा वर्तन्ते। इमे त्रयः गुणाः न केवलं मानवे भवन्ति, अपि च प्रकृतेः सर्वभूतेषु भवन्तीति निगद्यते। जन्मतः समाजाद्वा मानवेषु त्रिगुणप्रभावः भवतीति कथने यथौचित्यमङ्गीक्रियते मानवैः, तथैव मानवात् समाजव्यवहाराद्वा प्रकृतौ पर्यावरणे वा त्रिगुणात्मकं निर्दिष्टपरिवर्तनं सम्भवतीति अङ्गीक्रियेत। मानवैः पर्यावरणस्य श्रेष्ठतायै अर्थात् सात्त्विकगुणसम्पादनाय सात्त्विकैः, तथैव पालनरक्षणायै रजोगुणयुक्तैश्च च भाव्यमिति। एतदतिरिच्य तमोगुणभावैः पर्यावरणस्य विषये यदि मानवाःव्यवहरन्ति, तर्हि समाजस्यान्धकारः एव निश्चितः भवति। सत्त्वगुणपोषितप्रकृतिः पर्यावरणं वा निश्चितरूपेण मानवं श्रेष्ठगतिं प्रापयति। रजोगुणपोषितप्रकृतिः तत्तत्कर्मणा एव पुनरावृत्तिरूपेण मानवं कर्मसु समावर्तयति। तमोगुणप्रभावितप्रकृतिः तावत् मानवमन्धकारमधोगतिं वा प्रापयति। तथैवाह -

**कार्यकारणकर्तृत्वे हेतुः प्रकृतिरुच्यते।**
**पुरुषः सुःखदुःखानां भोक्तृत्वे हेतुरुच्यते। (भ.गी.13.20)**
**पुरुषः प्रकृतिस्थो हि भुङ्क्ते प्रकृतिजान् गुणान्।।**
**कारणं गुणसङ्गोऽस्य सदसद्योनिजन्मसु।। (भ.गी.13.21)**

**कारणं गुणसङ्गोऽस्य** इति शब्दस्त्वत्र प्रमाणभूतः भवति। प्रकृतिपुरुषोः अन्योन्याश्रये तथा हानये अपि गुणसङ्गः अत्र गणनीय एव भवति। मानवैः भौतिकप्रपञ्चे बहुकिञ्चिदनुभूयते इत्यत्र पर्यावरणमेव हेतुर्भवति। तथैव प्राकृतिकप्रपञ्चे यत्किमपि सम्भवति तत्र प्राणिषु मानव एव मुख्यकारकः भवति। परिवेशस्य अर्थात् पर्यावरणस्य प्रभावः मानवस्य शारीरिकमानसिकावास्थासु भवतीति कश्चनमनोवैज्ञानिकसिद्धान्तः अपि संलक्षितो वर्तते। मानवाः विविधमानसिकशारीरिकेच्छानां पूर्तये बहूनि सुखदुःखानि अनुभवन् स्वयं हेतवः भवन्ति। पर्यावरणान्तर्गतः अर्थात् प्रकृतिस्थः अयं मानवः प्रकृतिजान् गुणानेव अनुभवतीत्यत्र त्रिप्रकारकगुणाः सर्वैर्वितर्कनीयाः भवन्ति। जन्मतः अथवा निजस्थितौ तु मानवः प्रकृतावन्तर्गतः कश्चन प्रकृतेरनुयायी एव भवति। परन्तु यथा तां निजस्थितिमतीत्य त्रिगुणप्रभावी भवति तथा अनयोः प्रकृतिपुरुषयोः द्वयोर्विषये स्वयं सः विनाशकः दृश्यते। स्वार्थभावनया, अनुभवकामेच्छया, अधिकारमूढतया, तमोबुद्ध्या च प्रकृतेः अर्थात् पर्यावरणस्य नाशकारकश्च सञ्जायते। मानवस्य मानसिकेच्छानुगुणं प्रकृतिः प्रभाविता यथा भवति तथैव तया परिवर्तितप्रकृत्या मानवः अपि प्रभावितो भवतीत्यत्र न संशयलेशः।

प्रकृतिगुणप्रभावितः सः मानवः पर्यावरणपरिवर्तने कारणभूतस्सन् तदनुगुणमेव सदसज्जैविकजीवनं यापयति। गुणसंसर्ग एवात्र कारणमिति निश्चप्रचम्। क्रमशः यः त्रिगुणातीतः, स एव प्रकृतिमातरं त्रिकर्मशुद्ध्या संरक्षयितुं शक्नोतीति ज्ञायते।

**य एवं वेत्ति पुरुषं प्रकृतिं च गुणैः सह।**
**सर्वथा वर्तमानोऽपि न स भूयोऽभिजायते।।(23.13. भ.गी)**

श्लोके अस्मिन् कथ्यते यत्- प्रकृतिपुरुषयोः अनयोर्मिथः विद्यमानान्तःप्रक्रियां यः जानाति सः श्रेष्ठः भवतीति। पर्यावरणस्य विषये अपीत्थं सामाजिकाः सर्वे यद्यभिज्ञानेन चैतन्येन च व्यवहरन्ति, तर्हि मानवस्याथवा समस्तसमाजस्य वा कदापि गणनीयहानिः न भवति। अनयोर्मिथः विद्यमानः सम्बन्धः परस्परोपभोगात्मक एव न, अपि च अमूल्यः दिव्यः दैविकश्चेति मानवाः जानीयुः। तदैव विचक्षणशीलस्य मानवस्य समाजे मूर्धन्यस्थानं सिद्ध्यति। प्रकृतेः साङ्गत्येनैव सर्वदा सर्वथा च मानवाः व्यवहरेयुः। प्रकृतेः अर्थात् पर्यावरणस्य प्रत्येकं तत्त्वे दिव्यौषधतत्त्वम् आत्मसात्कुर्यात्। अनेन न केवलं मानवानाम्, अपि च समेषां जीवजालनां चराचरस्थावरजङ्गमात्मकानां सुगतिर्भवति।

**प्रकृत्यैव च कर्माणि क्रियमाणानि सर्वशः।**
**य पश्यति तथात्मानमकर्तारं स पश्यति। (30.13. भ.गी.)**

पिण्डोत्पत्तिकालादारभ्य जन्म ततः मरणञ्च यावत् मानवस्य सर्वावस्थाः अनुपमाः, विचित्राश्च भवन्ति। परमाणुपरिमितात् पुरुषस्य वीर्यकर्णात् मातृगर्भे विविधावयवसहितशिशोः जन्म कथं? सम्भवतीत्यत्र भौतिकप्रकृतिरियमेव उत्तरप्रदायिनी नान्यः कश्चन मानवः। यया भौतिकप्रकृत्या सर्वशः मानवः सृज्यते तयैव सह सः मानवः सत्सङ्गेन जीवेत इत्यत्र पर्यावरणस्य मौलिकविचारः दृग्गोचरो भवति। अतः मानवस्य त्रिगुणप्रभाविता देहस्थितिरेवात्र पर्यावरणनाशकस्य प्रदूषणस्य वा हेतुः नान्यत्। तथैव –

**यावत्सञ्जायते किञ्चित् सत्त्वं स्थावरङ्गमम्।**
**क्षेत्रक्षेत्रज्ञसंयोगात् तद्विद्धि भरतर्षभ ।। (27.13.भ.गी.)**

इह संसारे कस्यापि सृष्टिः सञ्जायते तत्प्रत्येकमपि जीवप्रकृतयोः संयोगादेव। अत्र न केवलं सृष्टिः, अपि च विनाशोपि तयोरेव जीवप्रकृतयोः संयोगादेव इति गूढविषयः। चराचरसृष्टिविचारेषु मानवः परमश्रेष्ठः उन्नतप्रकृतिश्च भवति। भौतिकप्रकृतिः तावत् सामान्या सहजैव। उन्नतप्रकृत्यात्मकस्य मानवस्य स्पर्शाभावात् कस्यापि भौतिकप्रकृतेः पदार्थस्य परिवर्तनं वृद्धिर्वा न सम्भवति। अतः पर्यावरणस्य संरक्षणे प्रदूषणे वा मानवस्यैव स्थितिगतयः गणनीयाः भवन्ति। अत उच्यते -

**यथा भूतपृथग्भावमेकस्थमनुपश्यति।**
**तत एव च विस्तारं ब्रह्म सम्पद्यते तदा।। (31.13.भ.गी)**

भौतिकभावनया मानवाः सर्वे वास्तवस्थितिमजानन्तः आशापाशैर्बद्धाः कर्माणि आचरन्ति। धर्माधर्मौ, कार्याकार्यौ, उचितानुचितौ अपि च सिद्ध्यासिद्ध्यात्मकौ विचारावेव मानवं सर्वथा मूर्धन्यस्थाने स्थापयतः। अतः शास्त्रविधिमनुसृत्य प्रकृतान्तर्गतेषु सर्वभूतेषु संयतेन्द्रियः, समबुद्धिमान् च स्यात्। सर्वभूतहिते एव सर्वदा कार्यं कुर्यात्तेन मानवेन। समेषु हितभावना स्यात्। सा च भावना त्रैकालिकी स्यान्न तु तात्कालिकी सान्दर्भिकी च । दूरस्थं समीपस्थं वा, स्वस्य परस्य वा भवतु हितभावनया साक्ष्मेक्षिकतया विचिन्त्य विज्ञाय च कार्यमाचरेत्। तथैवाह –

**अन्नाद्भवन्ति भूतानि पर्जन्यादन्नसम्भवः।**
**यज्ञाद्भवति पर्जन्यो यज्ञः कर्मसमुद्भवः।। (14.3.भ.गी.)**

**तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम्।**
**कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम्।। (15.3.भ.गी.)**
**एवं प्रवर्तितं चक्रं नानुवर्तयतीह यः।**
**अघायुरिन्द्रियारामो मोघं पार्थ स जीवति। (16.3.भ.गी.)**

अत्र तु पर्यावरणमानवयोः द्वयोरपि संरक्षणतन्त्रत्वेन कश्चन मार्गः प्रदर्शितः वर्तते। मानवजीवनम् अन्नादिति निश्चप्रचम्। न केवलं मानवस्य अपि च समेषां भूतानां जीनवप्रक्रिया तेनैव सिद्ध्यति। तत्त्वन्नं तु पर्जन्यादेव सम्भवति। पर्जन्यस्तु यज्ञानुष्ठादिति, ततः मानवेन तादृशं प्रकृतिहितकरं कर्म सर्वदा विधेयमिति कथ्यते। अर्थात् मानवस्य कर्म सदा सर्वदा सर्वथा सर्वधा च सर्वजीवेभ्यः सञ्जीविनी जीवप्रदायिनी च स्यात्। पुरा तु प्रकृतेः तथा समाजस्य तु कल्याणाय सर्वैरपि धार्मिकजनैः यज्ञादिकमेव योग्यकर्म विहितमासीत्। तेन सामाजिकवातावरणं पर्यावरणं वा, तथा मानवजीवनं वा स्वायत्तमासीत्। अधुना तु अन्नादीनि अर्जयितुं सम्पादयितुं वा कर्माणि पर्यावरणविरुद्धानि वर्तन्ते। प्राकृतिकसंसाधनानि त्यक्त्वा, कृत्रिमरासायनिकसंसाधानानि उपयुज्य पर्यावरणाविष्करणाय दुष्टप्रयोगाः, जैविककार्याणि च साध्यन्ते। अतः पर्यावरणे स्वाधीनता स्वास्तित्वं वा नावलोक्यते। न केवलं पर्यावरणे, अपि तु मानवजीवने अपि। शास्त्रोक्तं कर्म विहाय ये जनाः स्वार्थपराः सन्तः स्वभोगाय विरुद्धानि कर्माणि आचरन्ति ते, तथैव सर्वोपि समाजःतत्प्रभावतः निष्पीडितो भवत्येव। अतः मानवैः स्वजीविकायै प्रकृतेः संसाधनानि आश्रित्य प्रकृतेः शक्तिवर्धककार्याणि समाचरणीयानि भवन्ति। यथा पुरा यज्ञानुष्ठानम्।

**उपसंहारः** -

प्राणिषु मानवस्य जन्म तु अनुपममेव। परन्तु तत्कर्म तु सर्वजीवापेक्षया हीनं दृश्यते। मानवेतरप्रणिभिः पर्यावरणस्य प्रकृतेः वा हानिकरं कार्यं नाचर्यते इत्येवात्र कारणम्। प्रकृतिमनुसृत्य, प्रकृत्याधारेण वा सहजतया जीवनप्रक्रिया मानवेतरजीवानां जीवनं विद्यते। परन्तु मानवस्य तु तद्विरुद्धमेव लक्ष्यते। पुरा तु मानवः प्रकृतिं सृजति, पोषयति, संरक्षति च। परन्तु अधुना सः मानवः पर्यावरणस्य विनियोगे,नाशने एव दत्तश्रद्धालुः विद्यते। अतः पर्यावरणविचारः वैज्ञानिकयुगे अस्मिन् समस्यात्वेन समाजसम्मुखे विद्यते। कथ्यते हि भगवता –

**उत्सीदेयुरिमे लोकाः न कुर्यां कर्म चेदहम्।**
**सङ्करस्य च कर्ता स्यामुपहन्यामिमाः प्रजाः।। (3.24.भ.गी)**

इत्थं कयाश्चित् भावनया मानवैः यदि चिन्त्यते, तर्हि तदैव समाजस्य मानवस्य प्रकृतेः च हितं सेत्स्यति। शान्तिसाधकानि कार्याणि सर्वदा मानवैः विधेयानि, न तु अशान्त्युत्पादकानि। प्रत्येकं जनः चिन्तयेत् यत् – मया विध्युक्तकर्माणि एव विधेयानि न तदितराणि, तथैव अवाञ्चितानि प्रजाबाहुल्यकार्याणि विधाय तद्द्वारा समाजस्य अशान्तये कारणभूतः नाहं भवेयमिति च।

**सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः।**
**सर्वे भद्राणि पश्यन्तु मा कश्चित् दुःखभाग्भवेत्।।**

इति शम्।



# विस्मृतिः

**डा. श्यामराज. सि**
सहायकाचार्यः,
शिक्षाशास्त्रविभागः, गुरुवायूर् परिसरः
केन्द्रीयसंस्कृतविश्वविद्यालयः, नवदेहली

अस्माकं व्यवहारेषु सर्वदा “अहं तं स्मरामि, इदं कार्यं विस्मृतं” वाक्यद्वयं प्रयुज्यते। केचन ज्ञातविषयाः मनसि सर्वदा तिष्ठन्ति , केचनानुभवाः स्मृतिपदात् विलयं प्रयान्ति। एकदा प्राप्तः अनुभवः पूर्वस्मृत्या एव पुनः द्रष्टुं शक्यः भवति। पूर्वानुभवैः स्मृतिभिश्च नूतनस्रजनात्मकचिन्तनं मनसि समुदेति। स्मृतिशक्तिः अथवा क्षमता विज्ञानप्रगतये नितरां वरीवर्ति।

हृदिस्थं कार्यमेकं यस्मिन् अवसरे अपेक्षितं तत्क्षणे बुद्धौ नायाति चेत् अधीतं वृथा जायते तथा तां स्मृतिमधिष्ठाय यद्वैज्ञानिकं शास्त्रं चिन्तनं तत् सद्य एव स्थगितं भवति। प्रवचने लेखने च विस्मृतिः जवात् एव क्लेशं जनयति।अयं स्मृतेः दोषः।

परं दुःखकरं पूर्ववृतान्तं पौनपुन्येन स्मृतिपदं आपतति चेत् मनसि भृशं विषममुत्पादयति। तादृशं दुःखमयः पूर्वानुभवः स्मृतौ आविशति यदि उत्साहसहितं जीवनमुहूर्त्तं मलिनीकरोति तथा उत्साहरहितं कारयति च। यथा पूर्वानुभवः भयानकः दुरितपूर्णश्चेत् सा स्मृतिः जीवनान्तं अदृष्टपिशाचवत् अनुगच्छति। तादृशदुःखस्मृतिं त्याज्यकोट्यां हित्वा कदापि तत्स्मृतेः पुनरागमनं न भवेत् इति धिया काचित् मानसिकशक्तिः संप्रवर्तते। अत एव स्मृतिः विस्मृतिश्च जीवने बहुशः अपेक्षेते।

स्मरणं सामान्यतया अंशचतुष्टयात्मकम् अस्ति। यद् अस्माकं मनसि आदौ अभिलेखः (Record) भवति अथवा यद् अस्माभिः अधीतं ज्ञातं तत्। अधीतं यदि न धार्यते चेत् गच्छता कालेन न स्मर्यते अतः धारणं (Retention) अपेक्ष्यते। एवं मानसात् अधीतस्य धृतस्य ज्ञानस्य च समये पुनराह्वानं (Recall)करणीयमस्ति। तदनु प्रत्यभिज्ञानरूपं (Recognition) एकं स्मरणं प्रत्यक्षसहकृतं भवति यथा “सोऽयं देवदत्तः” इत्यत्र एकस्मिन् देशे दृष्टस्य देवदत्तस्य अस्मिन् देशे दर्शनं भवति तत्र प्रत्यभिज्ञानं फलति। एतादृशस्मरणस्वरूपं वुडवर्त्- महोदयैः प्रत्यपादि। भारतीयवैज्ञानिकैरपि कुलंकषतया स्मृतिः न्यरूपि मुख्यतया योग-आयुर्वेद-पुराणादिषु।अनुभूतविषयासंप्रमोषः स्मृति[1] रिति योगसूत्रे ऋषिणा न्यगादि। (memory consists in remembering what has previously been learned) पूर्वानुभूतस्य स्मरणं स्मृतिः भवति। अनुभवाः चित्ते ज्ञानस्य विषयस्य च संस्कारं जनयन्ति। अयं संस्कारः स्मृतिं जनयति। प्रत्येकोऽपि अनुभवः चित्ते तादृशधारणम् आपातयति। शिलालिखितमिव अनुभवः मनसि अभिलिखति। चरकसंहितायां इतोऽपि स्पष्टीक्रियते

**दृष्टश्रुतानुभूतानां स्मरणं स्मृतिरुच्यते॥** [2]

---

[1] योगसूत्रम्.1.11
[2] चरकसंहिता –शारीरं 1-149

दृष्टानां स्पृष्टानां श्रुतानाम् आघ्रातानां वस्तूनां समेषाम् अनुभवानां स्मरणमेव स्मृतिः भवतीति ।एवं प्राक्तानानुभवे नष्टे तदवष्टम्भसंभवात् संस्कारसज्ञात् सामग्र्यात् पौरुषाज्जायते स्मृतिः।[3] मानसात् विलयं गच्छत्सु अनुभवेषु सत्सु संस्कारसज्ञकैः उपायैः या प्रयत्नेन उन्नीयते सा स्मृतिः।

स्मृतिदृढतायै उपायाः

**आहारशुद्धौ सत्त्वशुद्धिः**
**सत्त्वशुद्धौ ध्रुवा स्मृतिः ।**[4]

सनत्कुमारः महर्षिनारदम् उपदिशति स्मृतिदृढतायाःउपायान् । अत्र आहारमिति ग्रहणेन केवलं भोज्यपदार्थाः न अपि च इन्द्रियैः अन्तकरणं प्रविश्यमानाः विषयाः अपि स्वीक्रियन्ते । एकं कार्यं अस्माकं हृदिस्थं जायते तदा तदध्ययने स्मरणे च सत्त्वशुद्धिः अनिवार्या अस्ति । अग्निवेशेन स्मृतिकारणानि अष्टौ प्रत्यपादिषत । तद्यथा –

**वक्ष्यन्ते कारणान्यष्टौ स्मृतिर्यैरुपजायते ।**
**निमित्तरूपग्रहणात् सादृश्यात् सविपर्ययात् ।।**
**सत्त्वानुबन्धादभ्यासात् ज्ञानयोगात् पुनःश्रुतात् ।**[5]

प्रत्येकं विचारयामो वयम् ।

- निमित्तग्रहणम् - कारणं ज्ञाते सति कार्यम् स्मर्यते ।महती वृष्टिः यदा जायते तदा पूर्ववर्षेषु जातानां प्रप्लावानां स्मरणं भवति ।
- रूपग्रहणम् – कस्तूरीमृगं दृष्टवान् कश्चित् पुमान् यदा बहुकालानन्तरं कस्तूरीपदार्थं जिघ्राति तदा तन्मृगविशेषमपि स्मरति ।
- सादृश्यम् – मार्गे क्रीडन्तं विद्यालयं गच्छन्तं बालकं दृष्ट्वा काचित् स्त्री स्वीयपुत्रं स्मरति ।
- विपर्ययम् – कञ्चित् वामनं पुरुषं दृष्ट्वा कदाचित् उन्नतं पुरुषं स्मरति ।
- सत्त्वानुबन्धनम् – स्मर्तव्येषु विषयक्रमेषु तत्र एकः विषयः स्मर्यते चेत् सर्वोऽपि विषयः स्मर्तुं शक्यते ।कालसम्बन्धेन देशसम्बन्धेन वा स्मर्तव्यः स्मृतिपदं समायाति ।
- आभ्यासः – पौनपुन्येन जप्त्वा कण्ठस्थीकृतस्य विषयस्य स्मरणं झटिति सम्भवति ।
- ज्ञानयोगः – तत्त्वज्ञानिना योगिना च स्मरणम् अनायासेन जायते ।
- पुनःश्रुतिः – पूर्वम् अधीतः श्लोकः विस्मृतः यदा स्मृतिपदात् उद्धृत्य वक्तुं परिश्रम्यते तदा येन केनापि श्लोकस्य पादद्वयं श्राव्यते तथा स्मपूर्णश्लोकः स्मर्यते ।

**विस्मृतेः कारणानि -**

श्रीमद्भागवते भगवता उपदिष्टं ज्ञानम् अर्जुनः विस्मृतवान् इति यथा

**गीतं भगवता ज्ञानं यत्तत् संग्राममूर्धनि ।**
**कालकर्मतमोरूद्धं पुनरध्यगमत् प्रभुः ।।**[6]

---

[3]मानसोल्लासवार्तिकं 7-12

[4]छान्द्योगुनिषद् 7-26-2

[5]चरकसंहिता –शारीरं 1-148/149

अनुभवस्य कालः दीर्घः भवति तदा स्मृतिः विस्मृतिं याति। श्रीकृष्णस्य स्वधामगमनात् पूर्वं तदुपदिष्टं ज्ञानं सर्वम् अर्जुनेन पुनः अध्येतव्यमभवत् ।अतः विस्मृतेः कारणानि अत्र उक्तानि सन्ति।

- कालः – गच्छता कालेन बुद्धिविच्छेदः जायते एवं स्मृतिनाशः जायते।
- कर्म – जीवने विविधानि कार्याणि कर्तव्यानि आधिक्येन करणीयानि भवन्ति तदा वहुविधैः क्रियाकलापैः कार्यैश्च अनुभवैः पूर्वतनानुभवः विलयमेति।
- तमः –सुःखभोगैः वैकारिक-अपघातैः अनुभवानां स्मृतिक्षयः जायते।

सुषुप्तिः,मोहालस्यं,प्रियजनानां वियोगः,ज्वराधिक्यम्,अतिदुःखम् ,मरणं,इन्द्रियेषु प्राणगतेः विघात इत्यादिषु सन्दर्भेषु अन्तःकरणं अनुभवैः साकं न संबध्नाति ।यथा-

**सुषुप्तिमूर्च्छोपतापेषु प्राणायनविघाततः।**
**नेहतेऽहमिति ज्ञानं मृत्युप्रज्वरयोरपि ।।**[7]

एकस्याः व्यक्तेः अकस्मात् जाते अपघाते मस्तिष्कस्य क्षतः जायते।यदा बहुकालं यावत् मूर्च्छिता भवति सा व्यक्तिः चेतनावस्थां प्राप्नोति तदा अपघातेन जातान् अनुभवान् कदापि स्मर्तुं न शक्नोति। अर्थात् चेतनावस्था यदा नष्टा जाता इन्द्रियैः अनुभवः दृष्टश्चेदपि मस्तिष्के अनुभवबोधः न जन्यते। अनुभवस्य मुद्रणा न जातेति अतः स्मृतिक्षमता न उदेति। योगदर्शनानुगुणं किञ्चित् व्याख्यायते चेत् चेतनमनः विविधवृतिभिः प्रक्षुब्धं तथा अचेतनमनसि ये अनुभवाः जाताः ते चेतनमनसः दर्शनयोग्याः न भवन्ति। यथा वृत्तिक्षयः जायते तथा सर्वेऽपि अनुभवाः स्मर्यन्ते चेतनमनः प्रत्यायायन्ते।

।।इति शम् ।।

**सन्दर्भग्रन्थाः**


- योगदर्शनम् , वेदरश्मिटीका, चौकम्बासुरभारति , 2002।
- चरकसंहिता, चौकम्बासुरभारति, 1998।
- छन्द्योक्योपनिषद्, चौकम्बासुरभारति, 2000।
- श्रीमद्भागवतम्, चौकम्बासुरभारति, 2001।
- मनोविज्ञानीयम् , भारतीयशास्त्रचिन्ता, सि.कृष्णन् नम्बूतिरि, आर्षप्रकाश. कालिकट्, 2009।
- Educational psychology , kendriya Sanskrit vidyapeetha , triupati, 1982 .




[6]श्रीमद्भागवतम् 1-15-30
[77]श्रीमद्भागवतम् 4-29-71

# मञ्जूषारीत्या शक्तिः

**Amal das D,**
SS – II, Roll No. – 24

शब्दाज्जातः शाब्दः, स च असौ बोधश्चेति शाब्दबोधः। लोके सर्वमपि कार्यं प्रति किमपि कारणं भवति। यथा दाहं प्रति वह्निः कारणं, घटं प्रति दण्डः कारणमित्यादिकार्यकारणभावः इति कश्चित् स्वीकरोति । वह्निसत्त्वे दाहः वह्न्यभावे दाहाभावः । कारणसत्त्वे कार्यम् उत्पद्यते कारणाभावे नेति अन्वयव्यतिरेकनियमेन शब्दश्रवणानन्तरं तस्मात् जायमानबोधं प्रत्यपि केनापि कारणेन भाव्यम् । एवं शाब्दबोधरूपकार्यं प्रति कारणत्वेन तद्धर्मावच्छिन्नविषयक- शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपितवृत्तिविशिष्टज्ञानं हेतुः इति कार्यकारणभावः अङ्गीक्रियते ।

यद्धर्मावच्छिन्नं लक्ष्यं स धर्मः लक्ष्यतावच्छेदकः, एवं यो धर्मः यस्यावच्छेदकः सः तेन धर्मेणावच्छिन्नः। परिष्कृत-कार्यकारणभावस्य समन्वयः घट इति उच्चारिते अयं घटः इति बोधो जायते। अत्र घटः इत्यस्य यो धर्मः घटत्वं तेन अवच्छिन्नघटः तद्विषयक - शाब्दबुद्धित्वावच्छिन्नः घटविषयक-शाब्दबुद्धित्वावच्छिन्नः यः शाब्दबोधः घटः अयमिति तं प्रति तस्य घटस्य यः धर्मः घटत्वं तेन अवच्छिन्नः घटः तन्निरूपिता या वृत्तिः घटत्ववृत्तिः तस्याः विशिष्टज्ञानं कारणं भवति । एवञ्च अयं घटः घटत्वविशिष्टः इति बोधो घटशब्दाद् भवति । शब्दश्रवणानन्तरं शाब्दनिरूपितवृत्तेः ज्ञानवतः एव पुरुषस्य बोधो जायते, न तु वृत्तिज्ञानरहितस्य पुरुषस्य । तादृशस्य पुरुषस्य शब्दश्रवणानन्तरं वृत्तिविशिष्टज्ञानाभावे अपि यदि शाब्दबोधः सम्भवेत् ,तर्हि शब्दस्यैव प्रमाजनकत्वेन सर्वैः शब्दैः समेषां श्रोतॄणां बोधो जायेत। अयम् उक्तकार्यकारणभावस्वीकारात् लब्धः अर्थः । दाहं प्रति वह्नेः स्वरूपेण कारणत्वं तद्वत् अत्र वृत्तेः शाब्दबोधं प्रति स्वरूपेण कारणत्वं नास्ति । तथा सति सर्वेषामेव बोधापत्तिः । ज्ञानविषयीभूतायाः एव वृत्तेः कारणत्वम् । तत्तद्विषयकशाब्दबोधं प्रति तद्वत् निरूपितवृत्तिज्ञानस्य कारणत्वाङ्गीकारादेव गुड इति पदस्य उच्चारणे प्रकारतया मधुरत्वस्य न भानं शाब्दबोधे इति समर्थसूत्रभाष्यमपि सङ्गच्छते ।

अयं घट इति बोधे घटः विशेष्यं घटत्वञ्च प्रकारः। अत्र विशेष्यता घटनिष्ठा, प्रकारता च घटत्वनिष्ठा । एवञ्च अस्मिन् बोधे घटः विशेष्यतया विषयः घटत्वं तु प्रकारतया विषयः। समानरीत्या गुड इत्यत्र गुडत्वाख्या जातिः प्रकारतया भासमानधर्मः। यद्यपि गुडस्य मधुरत्वात् मधुरत्वमपि तत्र प्रकारः। तथापि यद्धर्मप्रकारकवृत्तिज्ञानं तद्धर्मप्रकारकस्यैव बोधः । तेन प्रकृते गुडत्वप्रकारकबोध एव । मधुरत्वं तु गुडः मधुरः इक्षुविकारत्वात् इति अनुमानेन ज्ञानविषयः। कार्यदले तद्धर्मावच्छिन्नमिति विशेषणपदस्य निवेशः किमर्थः? विशेषणविशेष्यभावस्य विपरीततया गृहीतत्वात्, घटपदं घटावच्छिन्नघटत्वे शक्तमिति ज्ञानात् घटत्वविशिष्टविपरीतबोधवारणाय

तद्धर्मावच्छिन्नमिति विशेषणपदं योजनीयं कार्यदले । तद्धर्मावच्छिन्नविषयक-शाब्दबुद्धित्वावच्छिन्नं प्रति तद्धर्मावच्छिन्ननिरूपित-वृत्तिविशिष्टज्ञानं हेतुः इति कार्यकारणभावस्वरूपे ज्ञानं वृत्तिविशिष्टत्वेन विशेष्यते ।

अत्र कारणदले वृत्तिवैशिष्ट्यं सम्बन्धद्वयेन । तत्रादौ स्वविषयकोद्बुद्धसंस्कारसामानाधिकरण्यसम्बन्धेन। पुनः स्वाश्रयपदविषयकत्वसम्बन्धेन, उभयत्र स्वपदेन वृत्तिः स्वीकार्या । स्वविषयकोद्बुद्धसंस्कार - सामानाधिकरण्यसम्बन्धस्वीकारात् एकस्य वृत्तिज्ञानम् अपरस्य तु पदज्ञानं तत्र वृत्तिज्ञानपदज्ञानयोः सामानाधिकरण्याभावात् तादृशस्थले शाब्दबोधः नैव भवति ।

**सहायकग्रन्थाः**

1. परमलघुमञ्जूषा , श्रीनागेशभट्टः , चौखम्बा सुरभारती प्रकाशन् , वाराणसी , २०१८
2. वैयाकरणसिद्धान्तलघुमञ्जूषा , श्रीनागेशभट्टः , चौखम्बा संस्कृत सीरीज आफिस , १९८९



## सर्वेषां कृते गीतायां कर्तव्यबोधः

**जगज्जीबन सिंहः,**
SS –II, Roll No. -30

भगवतः मुखकमलविनिसृता श्रीमद्भगवद्गीता न केवलम् आर्यधर्मिणां कृते, विलिखिता, परन्तु इयं समग्रमानवानां कल्याणाय समुद्दिष्टा । जातिधर्मवर्णनिर्विशेषेण गीतेयं सर्वजनपाठ्या, सर्वेषां समादरणीया, इत्यत्र नास्ति शङ्का काचित् । अत्रैव श्रीकृष्णोपदेशबलेन उपदिशति यत् निरासक्तः भूत्वा सर्वदा कर्मकरणीयम्, फलप्राप्तिः तु भाग्याधीना भगवदधीना नेति। मनुष्यस्य तस्योपरि कर्तृत्वं नास्ति । भगवतः श्रीकृष्णस्य भाषया –

**कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।**
**मा कर्मफलहेतुर्भूर्मा ते सङ्गोऽस्त्वकर्मणि ।।**[1]

(1.भगवद्गीता, द्वितीयोध्यायः श्लोकसंख्या – ४७)

इदं तु गीताशास्त्रे कर्मयोगस्य मूलमन्त्रम् ।

परमेश्वरः श्रीकृष्णः सखायम् अर्जुनम् उपदिशति - " हे धनञ्जय ! कर्मसाधनोपरि तव कर्तृत्वम् अधिकारश्च वर्तते । परन्तु फललाभोपरि तव अधिकारः नास्ति । फलप्राप्तौ अपि न चिन्तय यत् अस्य लाभस्य त्वमेव हेतुः। यतः यत् किञ्चित् क्रियते, लभ्यते सर्वमेव ईश्वरेच्छा । "ईश्वरेच्छा बलीयसी" । क्षेत्रेऽस्मिन् मया पुनः वक्तव्यं, यत् ,कर्म प्रति त्वदीया श्रद्धा न भवति। मनसि स्वार्थचिन्ता दूरीभवति चेत् कर्मप्रति अश्रद्धा ,अनासक्तिः, अमनयोगः इत्यादयः कदापि न भविष्यन्ति । अतः हे गाण्डिवि ! सिद्ध्यसिद्ध्यौ । अनासक्तो भूत्वा कर्तव्यकर्म सम्पादया युद्धाय तु केवलं युद्ध्यस्व । सिद्ध्यसिद्ध्यौ समचिन्ता हि योगः। सिद्धिस्तु योगमनुगच्छति । योगस्तु कर्मसु कौशलम् । श्रीकृष्णस्य भाषया, " **तस्मात् योगाय युज्यस्व योगः कर्मसु कौशलम्** "[2] इति ।

(2. भगवद्गीता, द्वितीयोध्यायः श्लोकसंख्या ५० ।)

फलाशक्तिरहिताः यदि जनाः बद्धपरिकराः, लक्ष्यैकचित्ताः, कार्यं वा साधयेयुः शरीरं वा पातयेयुः इति मन्त्रोच्चारदीक्षिताः कार्यं साधयन्ति तदा पुरुषार्थचतुष्ट्यं तेषां मस्तकं नूनं मण्डयन्ति । अस्य निष्कामकर्मयोगस्य भावना मूलतः निहिता यजुर्वेदे ।

**कुर्वन्नेवेह कर्माणि जिवीविषेच्छतं समाः।**
**एवं त्वयि नान्यथेतोऽस्ति न कर्म लिप्यते नरे।।**[3]

(3. ईशावास्योपनिषद् शुक्लयजुर्वेदः ४०/२ )

निष्कामकर्मयोगः कीदृशः ? कीदृशं कर्म श्रेयोवहम् ? इति जिज्ञासायाम् उत्तरं प्रस्तूयते यद् अनाशक्तिभावनाया क्रियमाणं कर्म इहलोके – परलोके – सर्वत्रापि सुखप्रदमिति । अनासक्तिभावनायाः यत्र कर्म विधीयते, तत्तु न बन्धनहेतुः, न चैव दुःखसाधनम् । कर्तव्यबुद्ध्या कृतं कर्म सर्वदैव सुखावहम् । तत्रैव सुखमेव सुखम्, दुःखमेव दुखम् । सर्वसुखमेव केवलम् । समरे मृत्युः अपि सुखावहः ।

यतः कर्तव्यं सम्पादितम् । समरे शत्रुहत्या एव न हत्यादोषदूषिता , तत्तु वीरत्वभूषिता, गौरवावहः, अतः महाज्ञानी श्रीकृष्णः अर्जुनं बोधयति दर्शनमिदम्, -

**हतो वा प्राप्स्यसि स्वर्गं जित्वा वा भोक्ष्यसे महीम्।**
**तस्मादुत्तिष्ठ कौन्तेय युद्धाय कृतनिश्चयः।।**[4]

(4. भगवद्गीता ,द्वितीयोध्यायः श्लोकसंख्या ३७ ।)

कर्तव्यकर्मसम्पादनेन लाभस्तु लाभः । विजये लाभः, पराजयेऽपि लाभः । अतः कर्तव्यसम्पादनात् पराङ्मुखः कदापि न स्पृहणीयः । सुखदुःखे, जयाजये, लाभालाभे समभावना तु योग एव । अनेन यः कश्चित् जनः सिद्धिं विन्दति इति निःसन्देहः । अतः गीतायां सूच्यते –

**योगस्थः कुरु कर्माणि सङ्गं त्यक्त्वा धनञ्जय ।**
**सिद्ध्यसिद्ध्योः समो भूत्वा समत्वं योग उच्यते ।।**[5]

(5. भगवद्गीता ,द्वितीयोध्यायः श्लोकसंख्या ४८ )

इत्थमेव कर्मसु कौशलम्, एवं कौशलमेव योगः यस्तु सिद्धिप्रदः । निष्कामकर्मयोगं बोधयित्वा महानुभावः भगवान् श्रीकृष्णः अर्जुनम् अर्थात् जनसमाजम् उद्बोधयति, “ असक्तः भूत्वा कर्तव्यं कुरु ” इति । यथा –

**तस्मादसक्तः सततं कार्यं कर्म समाचर ।**
**असक्तो ह्याचरन् कर्म परमाप्नोति पुरुषः ।।**[6]

(6.भगवद्गीता, तृतीयोध्यायश्लोकसंख्या १९ )



# भारते गैर्वाण्याः पदोन्नतिः
## (PROMOTION OF SANSKRIT IN INDIA)

दीप्ती के.
SS -II, Roll. No – 03

संस्कृतभाषा सर्वासां भारतीयभाषाणां विकासाय भारतीयसंस्कृतेः संरक्षणाय च महत्त्वपूर्णां भूमिकां निर्वहति । संस्कृतभाषायाः रक्षणं विना भारतीयभाषाणां विकास: भवितुं नार्हति । संस्कृतं ज्ञान-विज्ञानयोः सैद्धान्तिकम् आदरं प्रददाति । भारतस्य समग्रविकासाय संस्कृतभाषायाः रक्षणं प्रचारश्च अवश्यं कुर्यात् । इदं दायित्वं निर्वहन् भारतसर्वकारः संस्कृतायोगस्य अनुशासनम् अनुसरणं च केन्दीयसंस्कृतमण्डलस्य स्थापनाम् अकरोत् ।

संस्कृतस्य औपचारिकपठनस्य 3500 वर्षाणि अतीतानि । जनानां मनसि अतितीव्रवेगेन इयं भाषा जनप्रियभाषारूपेण परिवर्तते । न केवलं भारते विदेशे अपि संस्कृतपठनस्य प्रचारः वर्धते अस्मिन् काले। विशिष्य जर्मनदेशे तथा स्विट्जर्लान्ड् , इट्टलि, .. इत्यादिषु राज्येषु संस्कृतसर्वकलाशालाः संस्कृतपाठनाय आरब्धाः । अधुना यत्र पूर्वमेव एषा संस्कृतपाठनसंस्कृति: वर्तते तत्र नाम अस्माकं भारते नूतनसर्वकलाशाला: एवमेव तत्र तत्र कलाशालासु नूतनपद्धतयः च आरब्धाः । बहवः छात्राः शिक्षाशास्त्रि - शिक्षाचार्या आदि प्रणाल्यः, तथा पि. एच्. डि अपि कुर्वन्ति । एतादृशविषयाणां पाठनाय भारतदेशे अष्टादशाधिकसंस्कृतविश्वविद्यालया: सन्ति । संस्कृतमाध्यमेन विभिन्नानां विषयाणां ज्ञानप्रदातार: विश्वविद्यालयाः इमे । प्राचीने भारते विश्वविद्यालयांनां स्वरूपं भिन्नम् आसीत् । तेषां सञ्चालनपद्धतिः अपि भिन्ना आसीत् । आधुनिके भारते विद्यापीठस्य स्थानं विश्वविद्यालयेन स्वीकृतम् । अतः विश्वविद्यालयशब्देन पुरातनानां संकल्पना तु स्वीक्रियते, परन्तु प्रणाली न । सम्प्रति भारते 18 संस्कृतविश्वविद्यालयाः सन्ति । त्रयः केन्द्रीय (Central), एकं डीम्ड् (Deemed) चतुर्दश राज्यविश्वविद्यालयाः (State) तत्र अन्तर्भवन्ति ।

ते यथा-

1. पूणा संस्कृतविश्वविद्यालयः , पूणा (महाराष्ट्रा)
2. संस्कृतविश्वविद्यालयः, कोल्कत्ता ( वेस्ट् बंगाल्)
3. केन्द्रीयसंस्कृतविश्वविद्यालयः, जनकपुरी, नवदेहली (देहली)
4. राष्ट्रियसंस्कृतविश्वविद्यालयः, तिरुपतिः (आन्ध्रप्रदेशः)
5. श्री लाल बहदुर शास्त्री राष्ट्रिय संस्कृत विश्वविद्यालयः, खट्वारियासरै, नवदेहली (दिल्ली)
6. कामेश्वरसिंह दर्भङ्गा संस्कृत विश्वविद्यालयः, दर्भङ्गा (बिहार)
7. कविकुलगुरु कालिदास संस्कृत विश्वविद्यालयः, रामटेक , नागपुरजिल्ला (महाराष्ट्रम्)
8. श्रीजगन्नाथ संस्कृत विश्वविद्यालयः, पुरी (ओड़िशा)
9. जगद्गुरुरामानन्दाचार्य राजस्थान संस्कृत विश्वविद्यालयः, जयपुर (राजस्थानम्)
10. सम्पूर्णानन्दसंस्कृत विश्वविद्यालयः, वाराणसी (उत्तरप्रदेशः)
11. सोमनाथसंस्कृत विश्वविद्यालयः, सोमनाथ (गुजरात्प्रदेशः)

12. उत्तराखण्डसंस्कृत विश्वविद्यालयः, हरिद्वारः (उत्तराखण्डः)
13. श्रीवेङ्कटेश्वरवैदिकविश्वविद्यालयः, तिरुपतिः (आन्ध्रप्रदेशः)
14. महर्षिपाणिनिसंस्कृत एवं वैदिकविश्वविद्यालयः, उज्जयिनी (मध्यप्रदेशः)
15. श्रीशङ्कराचार्यसंस्कृतविश्वविद्यालयः, कालडी (केरलप्रदेशः)
16. चन्दरशेखरसंस्कृतविश्ववद्यालयः, काञ्चीपुरम् (तमिलनाडुप्रदेशः)
17. कर्नाटकसंस्कृतविश्वविद्यालयः, बेङ्गलूरु (कर्नाटकम्)
18. कुमारभास्करवर्मसंस्कृत एवं प्राच्यविश्वविद्यलयः, नलबारि (अस्सोम्)

**गुरुकुलानि -**

आधुनिककाले आभारते 246 बालगुरुकुलानि विद्यन्ते । पुरातनकाले भारते विद्यमानविद्याभ्याससम्प्रदायेषु एको भवति गुरुकुलसम्प्रदायः । विविधविषयेषु, ज्ञानार्जनाय तथा नियतशिक्षासम्प्रदायार्थं च गुरुकुलसम्प्रदाय: वर्तते स्म । आवासीयपाठनसम्प्रदायाः अत्र प्रचलन्ति । अधुना भारतस्य विविधेषु राज्येषु संस्कृतपठनस्य संवर्धनाय बालगुरुकुलानि अपि प्रचलन्ति । आन्ध्रप्रदेशे षड्विंशति गुरुकुलानि , अरुणाचलप्रदेशे एकम् , आसां राज्ये द्वे , बिहारराज्ये चत्वारि , छत्तीस्गड् राज्ये चत्वरि, गोवा राज्ये एकादश ,चण्डीगड्-हरियाना राज्ययोः एकैकं, गुजरात् राज्ये द्वे , हिमाचलप्रदेशे त्रीणि, जम्मूकाश्मीरे द्वे , कर्णाटकायां एकविंशतिः, केरले त्रीणि , महाराष्ट्रायां द्विचत्वारिंशत् , ओडिशायां द्वे , राजस्थाने द्वादश , त्रिपुरायाम् एकं , तमिल्लनाडु-पुतुच्चेरि देशे चतुःपञ्चाशत् , वेस्ट बंगाले द्वे उत्तरप्रदेशे सप्तचत्वारिंशत् एवम् उत्तराखण्डे द्वे च वर्तते।

**शासकीयेतरसंस्थाः -**

**संस्कृतभारती -**

प्रमुखतया भारते संस्कृतशासकीयेतरसंस्थासु अग्रे तिष्ठति संस्कृतभारती । संस्कृतपठनस्य प्रोत्साहनं समाजस्य सर्ववर्गेभ्यः संस्कृताध्ययनार्थम् अवसरप्रकल्पनम् इत्यादयः अस्याः संस्थायाः लक्ष्याणि भवन्ति । एवमेव संस्कृतस्य प्रचाराय वैश्विकस्तरे संस्कृतसंस्थाभिः सह संयोजनं, संस्कृतपरम्परायाः संस्कृते निहितज्ञानस्य विषये च यथा योगः मनोविज्ञानं, कला, संगीतं , नृत्यम्, आयुर्वेदः इत्यादि शास्त्रेषु अनुसन्धानकार्याणां व्यवस्थापनं , संस्कृतभाषायाः पारम्परिकशास्त्राणां संरक्षकेभ्य: प्राचारकेभ्यश्च सहयोगः,सहकारः, छात्रवृत्तिः, मानदेयं , इत्यादीनाम् आलम्बनकार्याणां व्यवस्थापनम् ,संस्कृते वार्तापत्रिकाणां, पत्रिकाणां च प्रकाशनं संस्कृतभाषायाः शास्त्रपरम्परायाश्च प्रचारार्थम् अपेक्षितानाम् आर्थिकस्रोतसां निर्माणम् इत्यादीनि बहूनि कार्याणि संस्कृतभाषायाः संरक्षणाय पोषणाय च इयं संस्था अहोरात्रं प्रयतते।

**अन्याः संस्थाः-**

अमृतवाणी सेवाप्रतिष्ठानाम् , श्री अरविन्दाश्रमसंस्कृतकार्यालयः ,सार्वभौमसंस्कृतप्रचारसंस्थानम्, संस्कृतभाषाप्रचारणी सभा, संस्कृतसंवर्धनप्रतिष्ठानम् इत्याद्यः ।

एवं संस्कृतभाषायाः पोषणाय भारते अनेकाः संस्थाः नितरां प्रयतन्ते । अनेन इयं भाषा पूर्ववत् विश्वभाषारूपेण प्रचारे भविष्यति।



# संस्कृतभाषा

**गिरीशभट्टः**,
SS -II, Roll No. - 34

संस्कृतभाषा जगतः एकतमा अतिप्राचीना समृद्धा शास्त्रीया च भाषा वर्तते। संस्कृतं भारतस्य जगत: वा भाषास्वेकतमा प्राचीनतमा। भारती, सुरभारती, अमरभारती, अमरवाणी, सुरवाणी, गीर्वाणवाणी, गीर्वाणी, देववाणी, देवभाषा, संस्कृता वाक् दैवीवाक् इत्यादिभिः नामभिः भाषैषा प्रसिद्धा। भारतीयभाषासु बाहुल्येन संस्कृतशब्दाः उपयुक्ताः। संस्कृतात् एव अधिकाः भारतीयभाषाः उद्भूताः। तावदेव भारत-युरोपीय-भाषावर्गीयाः अनेकाः भाषाः संस्कृतप्रभावं संस्कृतशब्दप्राचुर्यं च प्रदर्शयन्ति।

व्याकरणेन सुसंस्कृता भाषा जनानां संस्कारप्रदायिनी भवति। पाणिनीयाष्टाध्यायी इति नाम्नि महर्षिपाणिनेः विरचना जगतः सर्वासां भाषाणां व्याकरणग्रन्थेषु अन्यतमा वैयाकरणानां भाषाविदां भाषाविज्ञानिनां च प्रेरणास्थानम् इवास्ति। संस्कृतवाङ्मयं विश्ववाङ्मये अद्वितीयं स्थानम् अलङ्करोति। संस्कृतस्य प्राचीनतमग्रन्थाः वेदाः सन्ति। वेद-शास्त्र-पुराण-इतिहास-काव्य-नाटक-दर्शनादिभिः अनन्तवाङ्मयरूपेण विलसन्ती अस्ति एषा देववाक्। न केवलं धर्म-अर्थ-काम-मोक्षात्मकाः चतुर्विधपुरुषार्थहेतुभूताः विषयाः अस्याः साहित्यस्य शोभां वर्धयन्ति अपि तु धार्मिक-नैतिक-आध्यात्मिक-लौकिक-वैज्ञानिक-पारलौकिकविषयैः अपि सुसम्पन्ना इयं देववाणी।

**इतिहासः**

इयं भाषा न केवलं भारतस्य अपि तु विश्वस्य प्राचीनतमा भाषा इति मन्यते। इयं भाषा तावती समृद्धा अस्ति यत् प्राय: सर्वासु भारतीयभाषासु न्यूनाधिकरूपेण अस्या:: शब्दा: प्रयुज्यन्ते। अत: भाषाविदां मतेन इयं सर्वासां भाषाणां जननी मन्यते। पुरा संस्कृतं लोकभाषा आसीत्। जना: संस्कृतेन वदन्ति स्म। विश्वस्य आदिम: ग्रन्थः ऋग्वेद: संस्कृतभाषायामेवास्ति। अन्ये च वेदा: यथा यजुर्वेद:, सामवेद:, अथर्ववेदश्च संस्कृतभाषायामेव सन्ति। आयुर्वेद-धनुर्वेद-गान्धर्ववेदार्थवेदाख्या: चत्वार: उपवेदा: अपि संस्कृतेन एव विरचिता:

सर्वा: उपनिषद: संस्कृतेन एव उपनिबद्धाः। अन्ये ग्रन्थाः शिक्षा, कल्पः, निरुक्तं ,ज्यौतिषं, छन्द: व्याकरणं ,दर्शनम्, इतिहास:,पुराणं ,काव्यं, शास्त्रं चेत्यादयः॥

**ध्येयवाक्यनि**

अल्पाक्षरैः अनन्तगाम्भीर्यगहनार्थयुक्तानि तादृशध्येयवाक्यानि गुरुः इव, मित्रमिव, श्रेयोभिलाषी इव अस्मान् निरन्तरं प्रेरयन्ति। जीवनयाने सत्प्रदर्शनं कुर्वन्ति। सूत्रं, मन्त्रः, तन्त्रं, सूक्तिः, सुभाषितरूपेणासंख्याकानि प्रेरणावाक्यानि सन्ति। तानि पठ्यमानाः जनाः नूतनोत्साहं, चैतन्यं, स्फूर्तिं च प्राप्नुवन्ति।

उदाहरणरूपेण कानिचन ध्येयवाक्यानि पश्यामः –

भारतमहाराज्येन सत्यमेव जयते इति मुण्डकोपनिषदः वाक्यं ध्येयवाक्यरूपेण स्वीकृतम्। भारतप्रशासनस्य राजमुद्रिकायाम् अङ्कितमिदं सर्वान् प्रेरयति। जनाः सर्वदा सत्यमार्गे जीवनं यापयेयुः इति भावेन एतद्वाक्यं स्वीकृतम्।

नेपालप्रशासनेन जननी जन्मभूमिश्च स्वर्गादपि गरीयसी इति मुण्डकोपनिषदः वाक्यं ध्येयवाक्यरूपेण स्वीकृतम्।

भारतस्य सर्वोन्नतन्यायालयस्य ध्येयवाक्यं यतो धर्मः ततो जयः इति महाभारतात् स्वीकृतम्। यत्र धर्मः वर्तते तत्र हि विजयः निश्चयः इत्यर्थः।

भारतस्य लोकसभायाम् अध्यक्षस्थानस्य उपरि लिखितम् अस्ति धर्मचक्रप्रवर्तनाय इति । तेन धर्मबुद्ध्या सभा चालयितव्या इति प्रेरणां लभतामिति चिन्तयित्वा तद्वाक्यं स्थापितम्।

भारतस्य डाक्-तार् विभागस्य ध्येयवाक्यम् सेवा अस्माकं धर्मः तदनुगुणतया उद्योगिनः अहर्निशं सेवारताः भवन्ति।

भारतीय रैल्विभागस्य वाक्यम् श्रम एव जयते,श्रमजीविनः, कर्मकराः जनानां सुखयात्रार्थं कार्यं कुर्वन्ति। रैल् विभागं विजयमार्गे चालयन्ति च।

भारतस्य जीवनभीमानिगमः इति संस्था श्रीमद् भगवद्गीतायाः योगक्षेमं वहाम्यहम् इति वाक्यं ध्येयवाक्यरूपेण स्वीकृत्य जनानां योग-क्षेमनिर्वहणार्थं व्यवस्थां करोति । नभः स्पृशं दीप्तम् इति ध्येयवाक्यं भारतीयवायुसेना इति संस्थायाः अस्ति। एतद् भगवद्गीतायाः एकादशाध्यायात् स्वीकृतम्। वायुसेनायाः शक्तिः दीप्तिः आकाशपर्यन्तं व्याप्तम् इत्यर्थं सूचयति एतद्वाक्यम्। भारतीय नौ सेना शं नो वरुणः इति उपनिषद् मन्त्रं स्वीकृत्य प्रेरणां प्राप्नोति। जलाधिदेवस्य वरुणस्य अनुग्रहेण देशरक्षणकार्ये सर्वदा निमग्ना भवति। आकाशवाणी बहुजनहिताय बहुजनसुखाय इति वाक्यानुगुणं जनानां हितार्थं, सुखार्थं, संगीतं, साहित्यं, सांस्कृतिकादि कार्यक्रमैः जनान् रञ्जयति । दूरदर्शनं सत्यं शिवं सुन्दरम् इति सुन्दरसंस्कृतवाक्यं ध्येयवाक्यरूपेण स्वीकृत्य श्रव्य - दृश्यमाध्यमेन जनमनोरञ्जनकार्यक्रमान् योजयति।

एवं बहुविधसंस्कृतसूक्तयः अस्मान् निरन्तरं प्रेरयन्ति, एषा संस्कृतभाषायाः महिमा अस्ति।

**Reference :**

1.Wikipedia
2. अन्तर्जालम्
3. शिक्षायाः दार्शनिकाधाराः – डा.सोमनाथसाहुः



# पाठ्यचर्यायां नवशिक्षानीतेः योगदानम्

**ग्रीष्मा एम्. एस्.,**
SS -II, Roll No. – 23

पाठ्यचर्या सर्वाङ्गीणविकासस्य आधारः वर्त्तते । पाठ्यचर्या शैक्षिकव्यवस्थानिर्धारणे समायोजकः वर्त्तते । पाठ्यचर्यायां समस्ताः अनुभवाः सम्मिलिताः सन्ति यान् बालकाः स्वविद्यालयनिर्देशेन प्राप्नुवन्ति । विद्यालये जायमानानां समस्तक्रियाकलापानां समूहः भवति पाठ्यचर्या । अर्थात् विभिन्नः सङ्घटितक्रियाकलापः- पाठ्यक्रम- पाठ्यक्रमेतरक्रिया विद्यालय-सामाजिकजीवन-विद्यालयवातावरणादीनि सर्वाणि पाठ्यक्रमे आयोजितानि भवन्ति ।

एकस्मिन् शैक्षिकवर्षे अनिवार्यरूपेण अनुष्ठीयमानानां कार्याणां व्यवस्थापितरूपमेव पाठ्यचर्या । शैक्षिकवर्षस्य प्रारम्भात् समाप्तिपर्यन्तं छात्रैः अध्यापकैः च अनुष्ठीयमानानां कार्याणां समायोजका भवति इयम् । कालानुगुणं पाठ्यचर्यायां परिवर्तनमपेक्षते । अस्मिन् वर्षे भारतीयसर्वकारैः शिक्षायाः औन्नत्यर्थं नवशिक्षा नीतिः आविष्कृता । प्रथमा नवशिक्षानीतिः इति अष्टषष्ठ्युत्तर- एकोनविंशतिशत्ब्धतमे वर्षे राजीवगान्धीमहोदयेन आविष्कृता । अधुना 34 वर्षाणि गतानि , समाजे बहुपरिवर्तनमागतम् । परन्तु अधुना एव अस्माकं शिक्षानीतौ परिवर्तनमागतम् ।

नवशिक्षानीतेः मुख्यमुद्देश्यं वर्तते यत् 18 आयुपर्यन्तं सर्वेषां कृते अनिवार्यरूपेण उत्तमशिक्षाप्रदानम् । एतावता 10 + 2 +3 इति शिक्षाव्यवस्था आसीत् । अधुना 5+3+3+4 इति व्यवस्था कल्प्यता नवशिक्षानीत्या ।

अर्थात् –

१. मूलस्तरः ( ५ वर्षाणि) - बालवाटिका , प्रथमकक्ष्या, द्वितीयकक्ष्या च ।

२. प्रारम्भिकस्तरः ( ३ वर्षाणि ) - ३ - ५ कक्ष्या पर्यन्तम् ।

३. माध्यमिकस्तरः ( ३ वर्षाणि ) - ६-८ कक्ष्या पर्यन्तम् ।

४. द्वितीयस्तरः ( ४ वर्षाणि ) - ९ - १२ कक्ष्या पर्यन्तम् ।

छात्रणां हिताय सुखाय च तेषाम् पठनभारं न्यूनीकर्तुं च पाठ्यचर्यायां बहुपरिवर्तनम् अनीतम् । तत्रादौ प्रत्येकं विषयस्य पाठ्यक्रमे मुख्यांशान् अतिरिच्य अनपेक्षितविषयान् निष्कासितम् । पाठ्य- पाठ्येतर- पाठ्यसहगामिक्रियाणां कृते समप्राधान्यं दीयते । अतः इतः परम् एवं विवेचनमपि न भवति ।

पाठ्यपुस्तककण्ठस्थीकरणेन यत् ज्ञानं लभ्यते तत् बहुपरिमितमेव , अनेन छात्राणां मानसिकविकासः अपि परिमितः भवति । अतः छात्राणां मानसिकविकासस्य एवं ज्ञानस्य च वर्धनाय प्रत्येकं कार्यक्रमाः

पाठ्यचर्यायाम् अन्तर्भूताः सन्ति । विमर्शनात्मकचिन्तनम् , अन्वेषणं , समाधानप्राप्तिः, परिचर्चा , विश्लेषणम् इत्याधारितशिक्षायै नवशिक्षानीतिः विशेषज्ञानं दीयते ।

पाठ्यपुस्तकस्य आश्रयं यावत् न्यूनीकर्तुं शक्यते तावत् न्यूनीकृत्य संवेदानात्मकरूपेण अध्यापनं लक्षीक्रियते । अध्ययनस्य कृते प्राधान्यं दीयते , अनेन कक्षाः जामितारहिताः भवन्ति । श्रुत्वा अध्ययनापेक्षया दृष्ट्वा अध्ययनं प्रभावीपूर्णं भवति । नूतने त्रिभाषासूत्रे संस्कृतभाषायाः कृते अपि विशिष्टस्थानं कल्प्यते । पञ्चमीकक्षापर्यन्तं मातृभाषया एव पठनम् ।

व्यावसायिकशिक्षायाः कृते प्रधान्यं दीयते। षष्ठीकक्षातः एव छात्राः कोडिंग्, प्रोग्रामिंग् आदि साङ्केतिकविषयान् पठितुं शक्नुवन्ति । प्रायोगिकविज्ञानस्य कृते विशिष्टं प्राधान्यं दीयते । ज्ञानप्राप्तिः एव मुख्यः न तु अङ्कः । कण्ठपाठं कृत्वा लेखनेन किमपि प्रयोजनं नास्ति । अतः परीक्षायां चिन्तनात्मकप्रश्नानां कृते अधिकं ज्ञानं दीयते । छात्राणां मूल्यनिर्णयपुस्तिकायाम् आत्ममूल्यांकनस्य कृते अपि अवसरः अस्ति। तत्र छात्रस्य सर्वाङ्गीणविकासस्य अङ्कनं भवति न तु केवलं लिखितपरीक्षायाः पूर्णाङ्कस्य ।

एवं छात्राः स्वीयप्रतिभा- ज्ञानं- कौशलानि च परिपोषयितुं शक्नुवन्ति ।

**REFERENCE –**

NEW EDUCATION POLICY 2021

CURRICULAM DEVELOPMENT



## प्रलय

**शुभेन्दु रञ्जन कर,**
SS -II, ROLL N0 - 12

यह अद्भुत संसार भगवत की
पहले सृष्टि अन्त प्रलय ।
जो जन्म लिया इस संसार में
उसका भी होगा विलय ॥
अरे जन्म लिया तो मरण निश्चित
प्रलय को मत डरो ।
कल का काम आज और
आज का काम अभी करो ॥

# भोः स्त्रि !

**Deepak Thorat,**
SS -II, Roll no. - 51

भो स्त्रि ! न कदापि त्वया पुरुषो भवितुं शक्यते...!!
त्वया कृष्णो भूयते ...?
परपुरुषेण सह
तव नाम योज्यते...?
यथा राधया सह कृष्णः ...!!

अन्येन पुरुषेण साकं सम्बन्धः स्थाप्यते ...??
सर्वै: कुलटा, चरित्रहीना चेत्युच्यते ...!!
हसित्वा किञ्चिदपि तेन सह भाष्यते
निर्लज्जा, कलङ्किनी च भूयते...!!!

स्त्रि! युधिष्ठरो भूयते.... ??
क्रियायां पत्नी पराभवितुं शक्यते.. ??
तवैव नेत्रयो: पुरतः --!!
वस्त्रहरणं द्रष्टुं शक्यते..??

तद्विपरीतं तु त्वया दुर्गा भूयते...!!!
पत्यु: सन्मानार्थम् ---
आपदानामुपरि जय : प्राप्यते. !!!
प्राणाः पठो योज्यन्ते...!!!

त्वया श्रीरामो भूयते ...??
स्वपत्नी त्यज्यते ..??
योऽपराध एव न कृतः ...
त्वया तदर्थं दण्ड्यते ...??

अनैतिकसम्बन्धरूप्यपराधस्याभावेऽपि...
त्वया अग्निपरीक्षा स्वीक्रियते ..??
त्वया न्यपराधः लभ्यते ..!!
दु:खसहस्रमपि सह्यते...!!!
तथापि हसोन्मुखी भूयते ..!!!

त्वया रामदासो भूयते ...???
एतावान् बृहन्निर्णयः स्वीक्रियते ..???
"सावधानं".. इत्युक्ते सति झटिति ...
विवाहमण्डपात् पलायनं क्रियते. .!!!

समाजेन त्वां बहिष्क्रियते ...!!
त्वय्यारोपाः प्रत्यारोपाश्च क्रियन्ते ...!!!
तव ज्ञानप्राप्तेः अधिकारः वर्तते ....
इत्यमान्यो भवेत् ..!!!

त्वया महत्मा-बुद्धो भूयते ...!!!
पतिपरमेश्वरः एकाकी बालश्च...
निद्रायां त्यक्त्वा गम्यते ...??
कर्तव्याद्विमुच्यते ....!!!

भो! त्वया तूभाभ्याम्...
स्वप्राणा अपि समर्प्यते ..!!!
स्व-भविष्यः पणे स्थाप्यते ..!!!
स्वेच्छानां बलिश्च दीयते...!!!.

हे स्त्रि! त्वं स्त्र्यसीति कारणात् ...
निमर्ला, सरला चासीति कारणात् ...
अबला न सबलासीति कारणात् ...
निश्चला अचला चासीति कारणात् ..!!!

सहजा, शक्तिश्चासि ....!!!
प्रेमजीवनञ्चासि ..!!!
ईश्वरस्येका अद्भुता, सुन्दरा,
अतुल्या च कलाकृतिः वर्तते ॥
भो स्त्रि! त्वं केवलं स्त्र्यसीति कारणात् ..!!!



अर्थात् - सुख चाहने वाले को विद्या (को पाना) छोड़ देनी चाहिये और विद्या पाने वाले को सुख छोड़ देना चाहिये। सुख चाहने वाले के पास विद्या कहाँ और विद्या चाहने वाले के पास सुख कहाँ इस प्रकार विद्यार्थी के कुछ कर्तव्य भी होते हैं जो कि वेदों में विस्तृत रूप में वर्णित है। विद्यार्थी अपने जीवन को

वेदानुकूल ही बनाने का प्रयत्न करे। अथर्ववेद का निर्देश है कि विद्यार्थी वेदों के आदेशों के अनुसार ही अपना जीवन व्यतीत करे। ऐसा कोई भी कार्य न करे जो कि वेदों में निषेध किया गया हो।

ऋग्वेद में बताया गया है कि "विश्वान देवान उषर्बुध.." अर्थात् विद्यार्थी का कर्तव्य है कि उस को प्रातःकाल ब्रह्म मुहूर्त में ही शय्यात्याग करना चाहिए। जिसे संस्कृत में कर्मठशिष्य: ब्रह्ममुहूर्त व शय्यात्यागं कुर्य्यात् इति। जो व्यक्ति प्रातःकाल में शीघ्र ही उठता है वह बलवान, स्वस्थ और दीर्घायु होता है।

**उपसंहार -**

विद्यार्थी को चाहिए कि उसको कभी भी आलस्य, प्रमाद और वाचालता आदि से युक्त न होना चाहिये। उसको सदा संयमी और सदाचारी होना चाहिए। इस प्रकार जब हम वेदों का अध्ययन करते हैं तो प्रत्येक व्यक्ति के लिए क्या कर्तव्य है और क्या अकर्तव्य है, किन-किन गुणों से युक्त होना चाहिए और किन-किन गुणों से रहित होना चाहिए यह सब बातें विस्तृत रूप में वर्णित है। अतः हमारा कर्तव्य है कि इन ईश्वर प्रदत्त निर्देशों का अच्छी प्रकार अनुसरण करके अपने जीवन को सुख शान्ति से युक्त करें और एक आदर्श व्यक्ति बनने का प्रयत्न करें।



## पुत्रभेदाः

**Gomati Priyadarshini,**

SS -II, Roll no. – 41

धर्मशास्त्रं भागत्रयेण विभक्तम् । यथा आचारभागः, व्यवहारभागः, प्रायश्चितभागश्चेति । एतेषु व्यवहारभागे अष्टादशविवादपदानि सन्ति । तेषु देहभागोऽन्यतमः । दायादभागप्रकरणे द्वादशपुत्रभेदविषये वर्णितमस्ति।

पुं नाम नरकात् त्रायते इति पुत्रः। ते पुत्राः द्वादशप्रकारकाः यथा- औरसः पुत्रिकापुत्रः क्षेत्रजः , गूढजः, कानीनः, पौनर्भवः, दत्तकः, क्रीतः, कृत्रिमः, स्वयं दत्तः, सहोढजः, अपविद्धश्चेति । तेषु आद्याः षड्दायादबान्धवत्वेन परिगणिताः। अपरे अदायादबान्धवत्वेन परिगणिताः।

**१- औरसपुत्रः** - द्वादशविधेषु पुत्रेषु प्रथमः औरसः । असौ मुख्यः स्वभार्यायां कृतविवाहसंस्कारायामुत्पादितः पुत्रः औरसः । सवर्णयां संस्कृताया मुत्पादितः पुत्रः औरसः इति बोधायनः कथयति ।

**२- पुत्रिकापुत्रः** – पुत्रिकायाः सुतः पुत्रिकासुतः । स एवौरससम इति वसिष्ठवचनात् ज्ञायते । औरसेन साकमसौ सममंशं लभेत ।

**3- क्षेत्रजपुत्रः** - निकटतमेन सपिण्डेन भ्रात्रा वा उत्पादितः पुत्रः क्षेत्रजपुत्रः । नियोगविधिनाऽयमेव पुत्र उत्पादितः। येन पुरुषेण पुत्र उत्पाद्यते स एव ऋतुकाले सर्वाङ्गशरीरं घृतलेपनं कृत्वा एकवारं गच्छेत् । स च नियुक्तः पुरुषः गर्भाधानात्परं रमणात् निवृत्तो भवेत ' अन्यथा पतितः स्यात् ।

**४- गूढजपुत्रः** - गृहेषु अवस्थितायां भार्यायां यदि पुत्रः अन्येन पुरुषेण उत्पद्यते तं सजातीयं ज्ञात्वा अपि यत्र पुरुषविषयस्य गमनं ज्ञायते गूढोत्पन्नः ।

**५- कानीनपुत्रः** - पितृगृहे स्थित्वा कन्या यदि पुत्रमप्रकाशं जनयति तर्हि परिणेतुः अयं कानीनपुत्रो भवेत्।

**६- पौनर्भवपुत्रः** - या भार्या पतिपरित्यक्ता अथवा विधवा किम्वा स्वेच्छया अन्यस्य भार्या भूत्वा पुत्रं जनयति स पुत्रः उत्पादकस्य पौनर्भवपुत्रत्वेन स्वीक्रियते ।

**७- दत्तकपुत्रः** - मात्रा पित्रा वा यः पुत्रः जन्मदानपूर्वकमापत्काले प्रदतः स एव पुत्रः दत्तकपुत्रः इत्युच्यते।

**८- क्रीतपुत्रः** - मातृपितृभ्यां यः पुत्रो धनदानेन विक्रीतः सः पुत्रः क्रीतपुत्र इति उच्चते ।

**९- कृत्रिमपुत्रः** - यं पुत्रं मातृपितृपरित्यक्तं कश्चन पुरुषः प्रलोभनप्रदर्शनपूर्वकं पुत्रत्वेन स्वीकरोति स तस्य कृत्रिमः पुत्रः स्यात् ।

**१०- स्वयंदत्तपुत्रः** - मातृपितृभ्यां त्यक्तः अक्रोधवशात् यदि कश्चन आत्मानमपरस्य सम्मुखे पुत्रत्वेन निवेदयति तर्हि ग्रहीतुः स स्वयंदत्तपुत्रः ।

**११- सहोढजपुत्रः** - अज्ञातगर्भा ज्ञातगर्भा वा यदि परिणीयते तस्याः जातपुत्रः वोढुः सहोढजपुत्रो भवति।

**१२- अपविद्धपुत्रः**- मातृपितृभ्यां परित्यक्तः पुत्रः अन्येन केनापि अपुत्रिकेण यदि स्वीक्रियते तर्हि तस्य अयमपविद्धपुत्रः भवति ।

औरसपुत्रस्याभावे पुत्रिकापुत्रः पिण्डदानधिकारी रिक्थग्रहणाधिकारी च । पुत्रिकापुत्रस्य ग्रहणात् अनन्तरं यदि औरसपुत्रः उत्पद्यते तर्हि औरसपुत्र समांशं पुत्रिकापुत्रः गृह्णीयात् । तयोर्मध्ये ज्येष्ठता न स्वीक्रियते । दत्तकपुत्र ग्रहणानन्तरं यदि ओरसपुत्रः उत्पद्यते तर्हि दत्तकपुत्रः औरसपुत्रस्य चतुर्थांशधनं गृह्णीयात् ।



# स्वास्थ्यम् आयुर्वेदेन

**स्वातिकृष्णा के. पि,**
SS -II, ROLL NO. – 04

अस्मिन् लोके अलोपति,होमियोपति यूनानि इत्यादि अनेकाः चिकित्सासम्प्रदायाः सन्ति । तेषु अत्युन्नतस्थानम् आवहति आयुर्वेदः। आयुष: वेदः भवति आयुर्वेदः। **"स्वस्थे शरीरे स्वस्थं मनः"** इति वाक्यम् अस्य शास्त्रस्य वैशिष्ट्यं कथयति। अत्यन्तपुरातनी फलप्रदा चिकित्सारीतिः च वर्तते । आयुर्वेदशास्त्रे चरकं - सुश्रुतं- कश्यपं - वाक्भटादि अनेकाः प्रसिद्धाः आचार्या: आसन्। ते चरकसंहिता सुश्रुतसंहिता, अष्टांङ्गहृदयम् , कश्यपसंहिता इत्यादि विविधान् ग्रन्थान् लिखितवन्तः। आयुर्वेदविषये चरकेन एवमुक्तम् -

**हिताहित सुख दुःखमायुस्तस्य हिताहितम् ।**
**मानं च तच्च यत्रोक्तमायुर्वेद स उच्यते ॥** (चरकसंहिता)

अस्यां शाखायाम् आरोग्यस्य संरक्षणं, पोषणं, रोगप्रतिरोध; रोगस्य चिकित्सा इत्यादय: समग्ररूपेण प्रतिपादयन्ति । अस्य चिकित्साक्रमे त्रयः स्तम्बाः सन्ति हेतुः लिंगं चिकित्साथेति । तत्र हेतुः इति पदेन रोगस्य कारणानि सूच्यते । लिङ्गे रोगस्य लक्षणानि प्रतिपाद्यन्ते । चिकित्सायाम् औषधविज्ञानं च प्रतिपाद्यते । स्वभाविकतया मनुष्यशरीरे वात-पित्त-कफश्चेति त्रयः दोषाः च सन्ति । एतेषां समत्त्वमेव आरोग्यमिति अष्टाङ्गहृदये उक्तम् । अतः वयं प्रथमतया शरीरस्य पालनं कुर्यास्म तदुक्तं भवति -

**सर्वमेव परित्यज्य शरीरमनुपालयेत् । शरीरस्य प्रकृष्टस्य सर्वमेव विनश्यति ॥**

शरीरस्य पालनाय आयुर्वेदः महत् प्राधान्यं कल्पयति। आयुर्वेदे लक्षणमनुश्रुत्य रोगस्य निर्णयं कृत्वा चिकित्सा विधीयते तदनन्तरं पथ्यमनुश्रुत्य औषधं ददाति । मानसिक-शारीरिकारोग्यपरिपालने भक्षणं, व्यायामः, दिनचर्या च यः सम्यक् पालयति सः स्वस्थः भविष्यति इति तत्त्वम् आयुर्वेदनोक्तम् । आयुः आन्तरिकबलं, सुखं, प्रीति इत्यादीनि वर्धयन्तः, षट् रसयुक्तानि भोज्यानि यथा योग्यं स्वीकरिष्यन्ति तर्हि निरोगिणः भविष्यन्ति, काले हित-मितभोजनेनैव शरीरस्य सुस्थितिः साध्या भवति । आहार: शरीरलीनाय, शक्तिवर्धनाय, आयुष: धारणाय, तेजस: वर्धनाय , जठराग्ने उद्दीपनाय च उपकरोति । शुद्धाहारादेव शुद्धं, शरीरशुद्धात् मनः, शुद्धं जीवनं च सम्पद्यते, यथा शुद्धजलस्नानेन ऊर्जशक्ति: च प्रवर्धते इति शास्त्रमेतत् अनुशास्ति। तदेव व्यायामेन शरीरलाघवं प्रत्युत्साह: दुर्मेधसः हरणं, पेशीनां दृढीकरणं आन्तरिकावयवानां(मस्तिष्कं हृदयं वृक्का इत्यादीनाम्) प्रवर्तनक्षमतावर्धनं च सिद्ध्यति । आयुर्वेदशास्त्रे चिकित्सायाः उपरि रोगप्रतिरोधे प्राधान्यं भवति, यथा शुद्धजलस्नानेन ऊर्जाशक्तिः च प्रवर्धते इति शास्त्रमेतत् अनुशास्ति। कालेऽस्मिन् आनेके जनाः आयुर्वेद - औषधानाम् उपयोगं कुर्वन्ति । अस्य प्रधानकारणं आयुर्वेदस्य महत् पारम्पर्यमेव । अन्यचिकित्सासम्प्रदायेषु रोगमुक्त्यर्थं आश्रितानि औषधानि अपि अन्यरोगस्य हेतुरूपेण परिणीयते। अतः पार्श्वफलभयात् आनेके जनाः आयुर्वेदं स्वीकुर्वन्ति । आयुर्वेदचिकित्सासम्प्रदाये कायचिकित्सा, बालचिकित्सा, ग्रहचिकित्सा, दंष्ट्रचिकित्सा शल्यचिकित्सा, ऊध्वङ्गचिकित्सा, जरचिकित्सा, विषचिकित्सा इत्यादि चिकित्साविधयः सन्ति विध्य: तपसा, पूतहृदयानां भारतीयमहर्षीणां च चिन्ताधारायाः परिणितिरेव भवन्ति । एवं आरोग्यशास्त्रशाखायां स्वास्थ्यरक्षणे आयुर्वेदस्य प्राधान्यम् अत्यधिकमस्ति ।



# आदर्शसंस्कृतशिक्षकः कथं भवेत्

**अनश्वरा बालन् ,**
SS – II, ROLL NO. – 06

संस्कृतमेव हि भारतम् । यदि वयं प्राचीन - अर्वाचीनभारतं ज्ञातुमिच्छामः तर्हि नास्ति संस्कृतसमः अन्यः उपायः । संस्कृतभाषाद्वारा भारतस्य वास्तविकस्वरूपं ज्ञातुं शक्यते ।

**" संस्कृतं नाम "देवी वागन्वाख्याता महर्षिभिः"**

संस्कृतभाषा केवलं लोकभाषा एव न अपि तु देवभाषा अपि भवति। सनातनवैदिकधर्मे गर्भधानसंस्कारात् आरभ्य अन्त्येष्टिपर्यन्तं षोडशसंस्काराः संस्कृतभाषाया एव उपनिबद्धाः सन्ति । संस्कृतम् एव संस्कृतिः एव संस्कारः च ।

**"जानाति विविधाः भाषाः जानाति विविधाः कलाः ।**
**आत्मानं नैव जानाति यो न जानाति संस्कृतम् ॥"**

अत्र उक्तं यत् -

विभिन्नासु भाषाकलादिषु निपुणाः सन्तः अपि ये आत्मानं न जानन्ति तेषां जीवनं व्यर्थं भवति । किन्तु यः विभिन्नासु भाषाकलादिषु निपुणः सन् अपि संस्कृतं जानाति सः आत्मानम् अपि ज्ञातुं शक्नोति । अत एव वयं वक्तुं शक्नुमः यत् संस्कृतभाषा मानवस्य सर्वाङ्गीणविकासस्य कारणीभूता भवति इति । संस्कृतभाषा अस्माकम् अमूल्यः निधिः एव वर्तते । अस्यां भाषायां विपुलं साहित्यं वर्तते । संस्कृतसाहित्ये वेदानां स्थानं सर्वोपरि वर्तते ( चत्वारः वेदाः, षड् वेदाङ्गानि इत्यादयः) पुनः काव्यानि, पुराणानि, अलङ्कारशास्त्रम्, धर्मशास्त्रम्, दर्शनशास्त्रम्, गणितम् इत्यादयः अनेके विषयाः उपलभ्यन्ते । एतत् सर्वं गुरुकुलेषु, आश्रमेषु, मठेषु च गुरुः पाठयति स्म । अतः भारतीयसंस्कृतौ गुरोः महत्वपूर्णं स्थानम् आसीत् । गुरुः देवतुल्यः भवति स्म । यथा भगवद्गीतायां कथयति " न हि ज्ञानेन सदृशं पवित्रमिह विद्यते। लोके पवित्रमस्य ज्ञानस्य दाता गुरुः एव भवति । सः एव अनुभवेन आचरणेन च लौकिकज्ञानं प्रयच्छति । योग्यगुरुः स्वस्य वचनमाध्यमस्य अपेक्षया अनुभवज्ञानेन एव शिष्यान् अथवा छात्रान् बोधयति । यः ज्ञानं ददाति, एवं शास्त्राणि शिक्षयति च सः शिक्षकः । अतः ऋषिः, गुरुः, आचार्यः, अध्यापकः, शिक्षकः इति तस्य नामानि भवन्ति । तत्र गुरुशिष्यसम्बन्धः दृढः स्नेहपूर्णश्च आसीत् । इदानींतनकाले गुरवः तादृशादरं न लभन्ते। प्रायः सर्वे जनाः स्वार्थपराः जाताः सन्ति । येन केन प्रकारेण गुरुं विनापि ज्ञानमिच्छन्तः एवं ज्ञानमार्जितवन्तः इव प्रवर्तन्ते । अतः गुरवः (अध्यापकाः) अपि उदासीनाः धनलाभाय च कटिबद्धाः इति दृश्यन्ते । तदर्थमस्माभिः संस्कृतज्ञैः संस्कृतशिक्षकैः सर्वैः संस्कृतभाषायाः प्रसारः प्रचारः च कर्तव्यः । अतः आदौ अस्मासु परिवर्तनम् आगन्तव्यम् । एवं गृहे परिवर्तनं तदनन्तरं समाजेषु परिवर्तनम् आनेतुं परिश्रमः करणीयः। संस्कृतभाषामाध्यमेन पाठयामः भारतीयसंस्कृतेः ज्ञानम् अन्येषां मनसि जनयामः । अत एव वयं संस्कृतज्ञाः आदर्शसंस्कृतशिक्षक - शिक्षिकाः च भवामः ।

**आदर्शसंस्कृतशिक्षकः कथं भवेत् ?**

वयं जानीमः यत् अस्माकं संस्कृतसाहित्यं मूलतः संस्कृते एव विद्यते इति। संस्कृतशिक्षणस्य लक्ष्यमस्ति यत् पठितारः संस्कृतसाहित्यम् अवगन्तुं समर्थाः भवेयुः । अस्याः प्रक्रियायाः साधकः एव

“आदर्शसंस्कृतशिक्षकः भवति । संस्कृतशिक्षकः सरलमानकसंस्कृतेन पाठयति । संस्कृतशिक्षणे भाषकौशलेषु दक्षता, नवीनशिक्षणपद्धतीनां प्रयोगः पाठ्यविषयज्ञानं इत्येतानि संस्कृतशिक्षकस्य लक्षणानि । संस्कृतशिक्षकः आदर्शवान् भवति । संस्कृतशिक्षया समाजस्य उद्धारणं करोति। नो चेत् संस्कृतशिक्षकः स्वकीयस्थानं न कल्पयति । स्वकीयस्थानं न स्थापयति चेत् संस्कृतशिक्षकाणां स्थितिः का भवति ? अतः संस्कृतशिक्षकाणां दायित्वं भवति, आदर्शरूपेण संस्कृताध्यपकत्वेन समुपलब्धिः आवश्यकी।

महाकविः कालिदासः मालविकाग्निमित्रे शिक्षकस्य निर्वचनं करोति यथा

**“ शिष्टा क्रिया कस्यचिदात्मसंस्था सङ्क्रान्तिरन्यस्य विशेयुक्ता ।**
**यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्टापयितव्य एव ॥"**

अस्य च अयं भावः केचन विद्याग्रहणे प्रवीणाः अपरे विद्यार्थीनां कृते बोधने कुशलाः । प्रायः शिक्षकाः विद्याग्रहणे, गृहीतविद्यायाः संक्रमणे च कुशलाः न भवन्ति । यस्मिन् शिक्षके एतदुभयमपि भवति स एव उत्तमशिक्षकः भवितुमर्हति ।

**आदर्शसंस्कृतशिक्षकस्य गुणाः -**

- भाषातत्त्वेषु दक्षः स्यात् ।
- शुद्धोच्चारणं भवेत् ।
- संस्कृतसाहित्यं प्रति अभिप्रेरकः स्यात् ।
- शुद्धः सुन्दरश्च लेखः भवेत् ।
- सरलमानकसंस्कृतेन पाठनम्।
- पाठ्यक्रमस्य समुचितविभाजकः ।

एवमेव सौम्यव्यक्तित्वदृष्ट्या संस्कृतशिक्षकस्य व्यक्तित्वगुणाः श्रीमद्भगवद्गीतायां उल्लिखिताः

**" मनः प्रसादः सौम्यत्वं मौनमात्मविनिग्रहः ।**
**भावसंशुद्धिरित्येतत्तपो मानसमुच्यते ॥ ”**

कक्षायां संस्कृतशिक्षकः संस्कृतेन एव पाठयेत् संस्कृतेन एव वदेत् । तत्र संस्कृतवातावरणं संस्कृतमाध्यमं कथम् आनयेत् इत्यस्मिन् विषये च श्रद्धालुः भवेत् । कक्षायां स्नेहशील: संस्कृतशिक्षक: चेत्, एवं छात्रानुरागी संस्कृतशिक्षकः चेत् छात्राणामपि तस्मिन् शिक्षके प्रीतिः भवति ।

अतः संस्कृताध्यापकः नीतिः, शासनानि, संस्कारः सर्वं जानाति तेन समाजे दोषरहितं व्यवहारं कर्तुं चेति न शक्नोति । संस्कृतप्रदर्शक: संस्कृताभिमानिन:, संस्कृतानुरागिणः, समाजस्य विकासाय, सुस्थितिनिमित्तं कार्यं कुर्वन्ति वयं संस्कृतशिक्षकाः उद्योगार्थं न, आदर्शभूताध्यापकाः भवामः । तदर्थमस्माभिः सर्वैरपि मिलित्वा संस्कृतभाषायाः उन्नमनाय प्रयत्नः विधेयः ।

" जयतु भारतम् । जयतु संस्कृतम् ।।"



# शिक्षया व्यक्तित्त्वविकासः

**Adwaitha A.S,**
SS- II, Roll no. – 08

शिक्षा काचित् गतिशीला प्रक्रिया भवति। एषा गतिशीला प्रक्रिया मानवानाम् अन्तर्निहितशक्तीनां बहिरानयनं करोति । समाजे शिक्षायाः प्राधान्यम् अत्यधिकमस्ति । किमर्थमित्युक्ते शिक्षया व्यक्तित्वविकासः जायते इत्यतः यत् वस्तु अभिव्यक्तं यत् दृष्टिगोचरं भवति, तत् व्यक्तिपदेन कथयति व्यक्तिपदेन पृथक् स्थितः मानवः अभिप्रेति। तस्य यः भावः असाधारणः वर्तते, सः एव व्यक्तित्वपदेन उच्यते । समूहात् एकैकः पृथक् सूचयितुं यः धर्मः वर्तते, सः धर्मः एव व्यक्तित्वम् । व्यक्तौ मानवे स्थिताः ये साधारणाः असाधारणाः च गुणाः, ते तम् अन्येभ्यो मानवेभ्यो पृथक् कृत्वा प्रदर्शयन्ति । तेषां धर्माणां समुदाय एव मानवगतव्यक्तित्वेन अवगम्यते । वस्तुतः मानवगतव्यक्तित्वं शिक्षया एव जायते । स्थिरचित्तो स्थिरचित्तत्वम्, उत्साहः मृदुस्वभावः, कारुण्यम् उत्तरदायित्वं साहसम्, अतिमात्रभाववंशगतत्वं, मैत्री, धैर्यं, दास्यबुद्धिः, अधिकारप्रियत्वं विषादशीलत्वं किन्नराश्चैव पृथक्वर्तित्वम्, कल्पनालोकसञ्चारित्वम् संशयशीलत्वम् इत्येते मानवप्रकृतिविशेषेषु अन्तर्भवन्ति । शिक्षया मानवाः समूहे जीवितुम् एवं स्वीय विकारान् प्रकटवितुं च शक्यन्ते । शिक्षया व्यक्तित्वविकासः जायते । परन्तु मानवाः परिश्रमम् अपि न कुर्वन्ति चेत् व्यक्तित्वविकासः सम्यक् न जायते तत् सुभाषितरूपेण उक्तं वर्तते -

**आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ।**
**नास्त्युद्यमसमो बन्धुः कृत्वा य नावसीदति ॥" इति ।**

मानवाः शिक्षायाः द्वारा परिश्रमम् अपि कुर्वन्ति चेत् सुष्ठुप्रकारेण ते, व्यक्तित्वविकासः जायते । मानवेषु परस्परविरुद्धाः गुणाः सन्ति । व्यक्तित्त्वं समीचीनं सृष्टं सङ्कलितं च भवतीत्यतः अस्यैवापरं नाम कलितव्यक्तित्वम् इति । छात्रेषु सङ्कलितव्यक्तित्वाभिवर्धनम् अध्यापकानां समाजस्य च उद्देश्यम् । मातापित्रोः प्रीतिः, गुरूणां वात्सल्य परेषा मैत्री, स्वातन्त्र्यम् इत्येते अपि अंशा बलैः न लभ्यते चेत् तर्हि तेषां मनसि किमपि कष्टं जायते,ततश्च असमीचीनं व्यक्तित्वं भवति। यस्य बालकस्य बुद्धिशक्तिः संवेगः दक्षता च समावस्थां प्राप्य शोभनं साध्यं च लक्ष्यमुद्दिश्य प्रवर्तन्ते तस्य व्यक्तित्वं समीचीनं स्यात् । उपदेशः, सान्त्वनं, सन्मार्गप्रदर्शनम्, ईश्वरविश्वासः, भाविनि शुभप्रत्याशा च बालगतिव्यक्तित्वं सम्यक् उद्भावयेत् । पाठशालायां पाठ्येतरकार्याणि बालानां व्यक्तित्ववर्धने उपकुर्युः । वंशधर्मः, परिवेशश्च व्यक्तित्ववर्धने मुख्यकारणे भवतः । जगति यावन्तः मानवाः सन्ति तावन्तः व्यक्तिप्रभेदाः वर्तन्ते । भगवान् गीतायां सत्वरजस्तमरूपगुणभेदेन मानवान् व्यस्तं चकार ।

**"रजस्तमश्चाभिभूय सत्वं भवति भारत ।**
**रजः सत्त्वं तमश्चैव तमः सत्वं रजस्तथा ॥ "**



४. भारतीय इंजीनियरी सेवा परीक्षा (जुलाई में )
५. भू विज्ञानी परीक्षा (दिसम्बर में )
६. स्पेशल क्लास रेलवे अप्रेंटिसेज परीक्षा (अगस्त में)
७. राष्ट्रीय रक्षा अकादमी और नौसेना अकादमी परीक्षा (अप्रेल और सितम्बर में )
८. सम्मिलित रक्षा सेवा परीक्षा ( मेई और अक्तूबर में)
९. सम्मिलित चिकित्सा सेवा परीक्षा (फरवरी में )
१०. भारतीय अर्थ सेवा / भारतीय सांख्यिकी सेवा परीक्षा (सितम्बर में)
११. अनुभाग अधिकारी / आशुलिपिक (ग्रेड ख/ ग्रेड १) सीमित विभागीय प्रतियोगिता परीक्षा (दिसम्बर में )

इसके अतिरिक्त राज्य लोक सेवा के अधिकारियों को संघ लोक सेवा से अधिकारी के रूप में भर्ती करना, भर्ती के नियम बनाना, विभागीय पदोन्नति समितियों का आयोजन करना, भारत के राष्ट्रपति द्वारा निर्दिष्ट कोई अन्य मामला सुलझाना इत्यादि इसके प्रमुख कार्य हैं। छात्र जब उच्चशिक्षा के बाद नियुक्ति के लिए अन्वेषण करेगा तभी उसकी सहायता के लिए संघीय लोक सेवा आयोग हि उसकी काम में आयेगा। संघीय लोक सेवा आयोग कि माध्यम से उसे देश में कहाँ पर कौनसा नियुक्ति क्षेत्र व्यवस्थित है उसके बारे में जानेगा और नियुक्ति के लिए जो भी परीक्षा उत्तीर्ण होने पडे उसके लिए तैयार होगा।

**सन्दर्भ सूची -**

UPSC wikipedia - en.m.wikipediag wiki/Union Public Service. Commission



## यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः

**Jayasmita Mahapatra,**
SS-II, ROLL N0.- 36

नारीगणाः सर्वदा पूजनीयाः । यत्र नारीणां सम्माननं विद्यते सः देशः स्वर्गः भवति । यत्र नार्यः असम्मानिताः भवन्ति, सः देश: नरकः भवति। तस्य स्मृतिग्रन्थे यथार्थं लिखति मनुः -

**"यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।**
**यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफलाः क्रियाः ।**
**शोचन्ति प्रमदाः यत्र विनश्यत्याशु तत् कुलम् ।**
**अनुशोचन्ति तु यत्रैता वर्द्धते तद्धि सर्वदा ॥"**

अतः नारीणां मर्यादाप्रदानं देशस्य गौरवम्। नराणां परमकर्तव्यं तु नारीणां सुष्ठु रक्षणावेक्षणम् | यस्मिन् गृहे नारी परिपूजिता अथवा सम्मानिता भवति, तत्र साक्षात् लक्ष्मीः विराजते। अतः उक्तम् -

**" तस्मादेताः सदा पूज्याः भूषणाच्छादनाशनैः ।**
**भूतिकामैर्नरैर्नित्यं सत्कारेषूत्सवेषु च ॥ "**

नारीणां पूजा चन्दनादिभिः न भवति । अस्याः पूजायाः तात्पर्यस्तु ताभ्यः मौलिकाधिकारप्रदानम् । शिक्षाधिकारादारभ्य सामाजिक - राजनैतिकादि अधिकारपर्यन्तं सकलं प्रदाय समाजे नारीणाम् उन्नतिवर्धनं करणीयम्। शिक्षिताः नार्यः देशं सुसंस्कृतं कर्तुं क्षमाः। नारी गृहिणीरूपेण, मातृरूपेण, भगिनीरूपेण, कन्यारूपेण च समाजस्य उन्नतये बहुकार्यं साधयति । ताभिरेव सृष्टिः सम्भवति । तास्तु क्षेत्रभूताः बीजभूताः पुंसाम् । क्षेत्रबीजसमायोगात् सर्वेषां देहिनामुत्पत्तिः ।

तथा हि -

**"प्रजानार्थं महाभागाः पूजार्हाः गृहदीप्तयः ।**
**स्त्रियः श्रियश्च गेहेषु न विशेषोऽस्ति कश्चन ॥"**

नारी सर्वदेवमहद्गुणानामधिकारिणी। सा एव सर्वसंहा धरित्रीव। सा क्षमायां पृथिवी च। साऽपि तप इव तेजोमयी, गाम्भीर्थे सागरः, सौन्दर्येण चन्द्रः, औद्धत्येन मेरुः, शुचितया सोमः मधुरवाचा गन्धर्वः, दीप्तमता प्रज्वलन्। सा विभिन्नावसरेषु भिनरूपेण प्रतिभाति। कदा सा भवति चण्डी रूपा दुर्गा अपि वा कदाचित मोहिनी, कदाचित् पुनः वात्सल्यपूर्णा माता। नारीं विना नरस्य स्थितिः अर्थहीना भवति । नरञ्च नारी च परस्परौ परिपूरकौ। एकस्यानिष्टम् अन्यस्यानिष्टं भवति । एकस्योन्नतिः अन्यस्योन्नतिः भवति । नारी जननीव अस्मान् रक्षति, गुरुरिव गौरवं वर्धयति। कान्तारूपेण सा अभिरमयति। सर्वदैव कायछायारूपेण स्थित्वा मङ्गलविधानं करोति । अस्याः त्यागः अतुलनीयः एवं कष्टसहिष्णुता अवर्णनीया । सा वत्सलतायाः, करुणायाः, स्नेहस्य, ममतायाः श्रेष्ठतमा मूर्तिः। अतः युगे युगे नारीणां गौरवं समाजे वर्तते। प्राचीनभारतवर्षे नारी समाजे न उपक्षेणीया आसीत् । तदानीं ताभ्यः सामाजिकाः राजनैतिकाः धार्मिकाः च अधिकाराः, पुरुषतुल्यमेव आसन्। यज्ञकार्येषु पुरुषः पत्न्यासार्धम् आहुति यज्ञकुण्डे पातयति। रामायणात् ज्ञायते, सीतायाः निर्वासनात् परं रामेण अश्वमेधयज्ञं प्रारभ्यते। स्त्रीं विना तद् यज्ञं अपूर्णतां गमिष्यति, इति कृते सीतायाः स्वर्णमूर्तिः तस्मिन् यज्ञस्थाने स्थापिता । अस्मात् स्त्रीणां धर्मकार्येषु साहचर्यं स्पष्टतया अनुभूयते।

न केवलं विद्यायां अन्येषु क्षेत्रेषु अपि नारीणां प्राधान्यं स्वीक्रियते। इन्दिरागान्धी महोदयानां भारतवर्षे नेतृत्वक्षेत्रे कीदृशी महनीयता आसीत् तत्तु सर्वे जानन्ति। पुरुषसुलभे करणीये रणकौशले आणि- नारीणां भूमिका युगे युगे प्रवर्तते। पुराणयुगे कैकेयी प्रभृतयः समरे स्वं स्वं रणकौशलं प्रदर्शितवत्यः। ऐतिहासिक युगे दुर्गाबाई - लक्ष्मीबाई प्रभृतयः रणक्षेत्रेषु अवतीर्णा अभवन्। अस्माकम् उत्कलभूमौ भौमकरशासनकाले त्रिभुवनमहादेवी - दण्डीमहादेवी प्रभृतयः साम्राज्ञगणाः सुचारुपेण राजदण्डं धृतवत्यः। अतः नारीगणाः पुरुषेभ्यः कस्मिंश्चित् गुणेऽपि

न्यूनाः न भवन्ति । यस्मिन् गृहे नारी सन्तुष्टा वर्तते तत्र लक्ष्मी: विराजते । यत्र भार्याः भर्तरि सन्तुष्टा अथवा भर्ता भार्यायां सन्तुष्टः, तस्मिन् कुले सर्वमेव कल्याणकरम् । परं यत्र नार्यः सीदन्ति तत्तु कुलं विनष्टतां गच्छति । नारीणां कर्षणेन कुलनष्टं भवति । सीतायाः अपमानात् रावणः महापराकान्तोऽपि सवंशेन हतः । द्रौपद्या: सभायां कृत - अपमानात् कौरवाः विध्वस्ताः, अन्यथा यत्र भीष्म, द्रोण - कर्ण प्रभृतयः सेनापतयः समर्थाः, तत्र कथं वा एतत ध्वसंसाधनम् ? केवलं द्रौपद्या: अपमानकरणं कारणम् अस्य | नारी तु गृहिणी, गृहस्य मर्यादा तस्यामेव वर्तते । तस्याः अपमानेन गृहं विध्वस्तं याति । यतः कथ्यते -

**न गृहं गृहमित्याहुः गृहिणीं गृहमुच्यते गृहं हि गृहिणीहीनम् अरण्यसदृशं मतम् ॥"**

गृहिणीं विहाय गार्हस्थ्यं कदापि न परिपाल्यते । सुनारी सुकन्या वा सुगृहिणी भवति। सुगृहिणी सुमाता भवति । सुमाता सुचारुरूपेण संसारं जीवयति । फलेन पूज्या भवति ।



# आधुनिकयुगे संस्कृतशिक्षा

**मोनिका चाटर्जी,**

SS -II, Roll No. – 46

भारतस्य राष्ट्रभाषा हि संस्कृतम् । एतदर्थं सर्वकारणं स्वीकृत्य पारंपरिकदृष्ट्या आलोचनायाः आवश्यकता नास्ति । सर्वकाराः संस्कृतं भारतस्य राष्ट्रभाषारूपेण स्वीकुर्वन्तु वा न वा, संस्कृतं हि चिरचरितदृष्ट्या भारतस्य राष्ट्रभाषा,योगसूत्ररक्षाकारीणी भाषा आसीत्, वर्तते, भविष्यति च। सर्वस्मिन् युगे भारतवर्षे सर्वेऽपि सज्जनाः, पण्डिताः, उच्चस्थानीयाः जनाः संस्कृतभाषया एव स्वमतं प्रकाशिवन्तः । भ्रमणकाले विभिन्नेषु राज्येषु वाक्यालापं संस्कृतेन एव कृतवन्तः । संस्कृतनाटकेभ्यः ज्ञायते यत्, आर्यः, भृत्याः नीचश्रेणीयाः जनाः यद्यपि संस्कृतमाध्यमेन वार्तालापेन न पारङ्गता आसन्, तथापि उच्चस्थानीयानां भाषा संस्कृतं नासीत्, तथापि ताम् अवगन्तुं तेषां सामर्थ्यं आसीत्। दिग्विजयकाले श्रीमता शङ्कराचार्येण यत् किंचित् स्वमतं प्रकाशितं तत्सर्वं संस्कृतभाषया कृतम् । तेनापि यल्लिखितं, सर्वमपि संकृतभाषायामेव लिखितम्। तस्य अद्वैततवाद: संस्कृतभाषायां समग्रभारतस्य कृते विलिखितः प्रतिपादितश्च। सोऽपि केरलवासी, तस्य मातृभाषा तु भिन्ना । तथापि तेन गृहीता संस्कृतभाषा भारतवर्षे संयोग रक्षाकारिणी भाषारूपेण अपि सम्पादिता। शङ्करदिग्विजयात् ज्ञायते यत्, तदानीं ग्राम्यनारीगणाः अपि संस्कृतभाषया भावप्रकाशनेन सुदक्षाः आसन्। मण्डनमिश्रस्य गृहस्य स्थितिविषये आचार्येण शङ्करेण पृष्टा एका बाला उत्तरेण कथयति संस्कृतभाषया-

**स्वतः प्रमाणं परतः प्रमाणं किशङ्गनां यत्र गिरं गिरन्ति ।**
**द्वारस्थनीडान्तरसंनिरुद्धाःजानी हि तन्मण्डनमिश्रधाम ।।**

परन्तु, आधुनिकयुगे यदा प्रश्नमागच्छति, का भाषा राष्ट्रभाषा भवितुं अर्हति? तदा प्रतिष्ठितैः राजनीतिपूर्णैः जनैः संस्कृतभाषयाः नाम विस्मृतमित्यनुभूयते । राष्ट्रभाषाप्रसङ्गे दाक्षिणात्ये विरोधः अभवत् । तथापि संस्कृतस्य नाम न श्रूयते । एतत्तु भारतस्य दौर्भाग्यम् । शासकवर्गाणि संस्कृतं प्रति आनुमत्यं भवतु वा न वा, भारतवर्षे संस्कृतवृक्षस्य मूलं सदैव सुदृढमस्ति । येन अस्य उत्पाटनं सर्वथा असम्भवम् । उक्तं च -

**"यावत् भारतवर्षं स्यात् यावत् विन्ध्यहिमाचलौ ।**
**यावत् गङ्गा च गोदा च तावदेव हि संस्कृतम् ।।"**

संस्कृतस्य मूल्यायनाय बहुपुस्तकानि लिखितानि । सर्वत्रापि एतत् सिद्धं भवति यत् भारतस्य संस्कृतेः वाहिका भाषा संस्कृतम् इयं भाषा सकलज्ञानस्य आकरः । भाषातात्त्विकदृष्ट्या अस्य महत्त्वं सर्वथा अनस्वीकार्यते । संस्कृतस्य महत्वं ज्ञात्वा वैदेशिकैः अस्य प्रभूतभावेन अध्ययनं कृतम्।भारतात् बहिः बहुषु विद्यालयेषु संस्कृतस्य अध्यननं क्रियते । तत्र संस्कृतस्य उपरि निविडभावेन गवेषणं क्रियते । सुखस्य विषयः यत् अधुना भारतवर्षे वातावरणे परिवर्तनं परिलक्ष्यते । बहवः संस्कृतप्रेमिणः संस्कृतराश्च राजनीतिक्षेत्रेषु प्रतिष्ठिताः । अतः संस्कृतशिक्षायाः प्रसार : भारतवर्षे सर्वत्र भवति । वारणासि प्राचीनभारते संस्कृशिक्षायाः मुख्यपीठमासीत्। अधुनाऽपि तत्र संस्कृतस्य महत्त्वं विद्यते। प्रमुखाः संस्कृतविद्वांसः तत्र विश्वविद्यालये महाविद्यालयेषु च अवस्थापिताः । पुण्यपत्तने दाक्षिणात्ये संस्कृतशिक्षायाः मुख्यपीठं प्रतिष्ठितम् । अस्माकं देशे सर्वत्रापि विश्वविद्यालयेषु संस्कृतस्य अध्ययनं भवति । अधुना पण्डितानां मध्ये एकः अभूतपूर्वः उत्साहः दृश्यते । बहवः ग्रन्थाः पण्डितवर्गैः लिख्यन्ते । अनुभूयते, संस्कृतस्य दुर्दिनानि गतानीति| भारतवर्षे संस्कृतस्य उन्नतिः परिलक्ष्यते। उत्कलप्रदेशस्य प्रथितयशस्विना, विद्यानुरागिणा संस्कृतभाषा पारङ्गतेन तथाकथितमहापण्डितेन मुख्यमन्त्रिणा परमविदुषा महानुभवेन श्रीयुक्तेन जानकीवल्लभमहनायकमहाभागेन श्रीक्षेत्रे पुरुषोत्तमे एकः संस्कृतविश्वविद्यालयः कथमपि प्रतिष्ठापितः । अस्य प्रथमकुलपति आसीत् आचार्यः श्रेष्ठाः प्रतिथगुरुवः श्रीयुक्तः प्रह्लादप्रधानमहोदयः। तैः महोदयैः तत्र स्वल्पसमयशासनकालेऽपि स्वल्पशिक्षादानविभागः प्रतिष्ठापितः । तस्मिन् अकाले परलोकगते सति श्री जगन्नाथ-संस्कृत-विश्वविद्यालये शिक्षादानाय अन्ये बहुविभागाः नोद्घाटिताः । उपयुक्तपण्डिताः उपयुक्त- पदेन नाधिष्ठिताः । येषां यस्मिन् विषये पारदर्शिता विद्यते, ते यदि तत्र तस्मिन् पदे कार्यं न कुर्वन्ति तदा अत्र उत्कलप्रदेशेन संस्कृतस्य उन्नतिः कथं वा भविष्यति ? उदाहरणतः यदि व्याकरणज्ञः शास्त्रं जगन्नाथसंस्कृतिविषये अध्यक्षपदमलंकुर्वन्ति, पाश्चात्यसेनाविदः तन्त्रशास्त्राध्यक्षाः भवन्ति, प्राचीनपोपि पठनज्ञानहीनाः पाण्डुलिपिसंस्कारेण निर्देशकत्वेन नियुक्ताः भवन्ति तद्- विश्वविद्यालयस्य का वा उन्नतिः साधिता भविष्यति ? नियुक्तिक्षेत्रेषु, ज्ञानार्जनेषु यदि राजनीतिक्रीडनं भवति स्वार्थ साधनं भवति, तदा कुतः शिक्षाक्षेत्रेषु उन्नतिः यास्यति ? अधुना शिक्षानुठानेषु, शिक्षाक्षेत्रेषु राजनीतिः अनुप्रवेशः सर्वत्रापि दृश्यते।

अस्यां परिस्थित्यां तद्विद: ज्ञानसागरमनस्काः विशेषतया राजनीतिक्रिडायाम् असमर्था: भूत्वा शिक्षानुष्ठानेषु अवस्थापिताः न भवन्ति। व्यासवशिष्ठऋषयः इव ते समाजस्य अन्तराले स्थित्वा ज्ञानान्वेषणं कुर्वन्ति। अनेनापि अनुष्ठानिकसाहाय्यं विना गवेषणात्मकलेखनं, पठनं च प्रचलितम्। संस्कृतस्य यदि श्रीवृद्धिसाधनं भवति तत्तु संस्कृतस्य गौरवम्। अतः संस्कृतभाषा अमृता भाषा। अस्याः भाषायाः विलोपः कदापि न सम्भवः उपयुक्तभावेन पठनपाठनेन अस्याः भाषायाः उन्नतिः कालक्रमेण साधिता इति नास्ति शंकावकाशः। कामये संस्कृतस्य उन्नतये छात्राः,शिक्षकाः, प्रशासकाः, राजनीतिमुख्याः, सर्वेऽपि यत्नशीलाः भवेयुः। यतः संस्कृतम् अस्माकं गर्वं गौरवं च। संस्कृतं विहाय भारतस्य गौरवं न परिकल्प्यत।



## महान् देशो हि भारतम्

**प्रीतिप्रज्ञा मुदुलि,**

SS-II, Roll No. – 31

विशालोऽयं देश: अस्माकं भारतवर्षम्। एष: देश: देशानां शिरोमणिः खलु | देशोऽयं नाना प्राकृतिकसम्पन्निष्ठात्मकः इति तु सर्वविदितमेव। भूमि: विविधप्राकृतिकशोभामण्डिता। अस्याः सौन्दर्यं सर्वेषां मनः मोहयति। अस्य देशस्य उत्तरस्यां दिशि नगाधिराजः हिमालयः किरीटरूपेण शोभते। दक्षिणस्यां दिशि भारतमहासागरः देशमातृकाया: चरणप्रक्षालनं करोति। पश्चिमभागे आरबसागरः, पूर्वभागे बङ्गोपसागरच तस्याः शोभां वर्द्धयतः। पुनश्च वनराजिमण्डिताशिशिरसुशोभिता अस्माकमियं जन्मभूमिः। बहुप्रकारैः औषधमयतरुभिः पशुपक्षिभिश्च अयं देश: श्रीसम्पन्नः विभाति। अस्य देशस्य नामकरणविषये बहवः विचाराः दृश्यन्ते।

पुरा ऋषीणां राजर्षिः आसीत्। सः स्वकीयदेशं स्वपुत्रेषु विभज्य भारतनामधेयं पुत्रस्मिन् देशे राजपदे स्थापितवान् तस्य नामानुसारेण अयं देश: भारतवर्षमिति केचन वदन्ति। अन्येऽपि दुष्यन्तपुत्रस्य भरतस्य नामानुसारेण अस्य देशस्य नामकरणं भवतीति वदन्ति। अस्माकं भारतवर्षं महर्षिव्यासभासवाल्मीक्यादीनां, महाकवीनां कालिदास- भारवि- श्रीहर्षादीनां, समाजसंस्कारकाराणां शङ्कराचार्यचैतन्यनानाकविभूतानां महापुरुषाणां विवेकानन्दमहात्मागान्धीनां तथा महावीराणाम् अर्जुनकर्णादीनां जन्मस्थलं भवति। अस्मिन् देशे बहवः सम्प्रदाया: विभिन्नभाषाभाषिणश्च निवसन्ति। अवश्यं भाषा -सम्प्रदाय -लोकाचारपूजापद्धतिषु तेषां भिन्नताः विद्यन्ते। परन्तु तासु विविधास्वपि भिन्नतासु संहतिसूत्रं सुविन्यस्तम्। सर्वे सूत्रे मणिगणा इव शोभन्ते। अधुना गणतन्त्रशासने वयं सर्वे जातिधर्मवर्णनिर्विशेषं स्वविकाशाय समानसुयोगः लभ्यते। अतः वयं सर्वे देशश्य देशवासिनां च उन्नतिं विधातुं चेष्टामहे। कथ्यते स्वर्गस्थाः देवा अपि अत्र जन्माकाङ्क्षिणः भवन्ति। जन्मसहस्राणां पुण्यसञ्चयात् कदाचित् जीवोऽत्र मनुष्यजन्म लभते इति शास्त्रवचनेषु स्वर्गापवर्गादीनि इयमस्माकं जन्मभूमिः स्वर्गादपि गरीयसी इति।

अस्य देशस्य महनीयतार्थ:- हिमालयादासमुद्रं पुण्यक्षेत्रञ्च भारतम् श्रेष्ठसर्वस्थलानाञ्च मुनीनाञ्च तपोस्थलम्।



# सोशल्मीडिया तथा अस्य सामाजिकनैतिकमूल्याङ्कनपक्षः

**प्रतीति आर्या,**
SS-II, Roll No. – 29

अद्य सर्वस्मिन् जगति "सोशल्मीडिया" इति नाम्ना न कोऽपि अपरिचितः अनभिज्ञः च । एतत् मीडिया आधुनिकयन्त्रेषु तथा सूचनापरिवहनादिषु यन्त्रेषु पृथक् वर्त्तते । सोशल्मीडिया अन्तर्जालमाध्यमेन एकस्य नूतनसंसारस्य निर्माणं करोति तथा तं निर्वहति च । अस्योपयोगकर्तारः अस्य विभिन्नेषु मञ्चेषु यथा (फेसबुक, इंस्टाग्राम, ट्विटर, व्हाट्स ऐप, यूट्यूब) आदिष्वतिसहजरूपेण स्वगन्तव्यं निश्चीयन्ते । अद्यत्वे मानवजीवनाय अन्नजलस्य यथावश्यकता वर्त्तते तथैव अस्यापि महत्त्वपूर्णमावश्यकता वर्त्तते। आबालवृद्धपर्यन्तं सर्वेषामावश्यकता वर्त्तते सोशल्मीडिया । किमस्ति सोशल्मीडिया? सोशल्मीडिया एकः अन्तर्जालिकः संसारः वर्त्तते, यत्र जनाः अन्तर्जालमाध्यमेन स्व गन्तव्यं निश्चीयन्ते अथवा सोशल मीडिया एकः विशालः अन्तर्जालः वर्त्तते यत्र सम्पूर्णविश्वः एकत्री भवति । सञ्चारक्रियायाः एकं सरलमाध्यमरूपेण एतज्ज्ञायते । अनेन माध्यमेनैव द्रुतगत्या सूचनानामादानप्रदानं भवति यत्र सम्पूर्णविश्वस्य वा क्षेत्रस्य समाचारः समाहितो भवति । ये स्वप्रतिभाप्रदर्शनाय अवसरं न प्राप्नुवन्ति तेऽपि अनेन साधनेनैव स्वकलाप्रतिभायाः प्रदर्शनं कृत्वा प्रख्याताः भवन्ति । एवमस्य सकारात्मकपक्षाणां सत्वेऽपि अनेके अत्र नकारात्मकपक्षाः अपि सन्ति । यथा अनेक जनाः भ्रामक -अश्लीलचित्रादिकं निर्माय सर्वत्र प्रसारयन्ति तथा च कमपि सामान्यसूचनामपि अतिविस्तृतरूपेण तस्मिन् विषये मिथ्या चर्चादिकं कृत्वा अपराधं कुर्वन्ति । अत्र सर्वप्रमुखापराध: "साइबर् अपराधः" इति नाम्ना विख्यातमस्ति । अस्य केचन प्रमुखकार्याणि भवन्ति यथा सूचनानां सञ्चारः । अत्र सम्पूर्णविश्वस्य वा क्षेत्रस्य समाचारः समाहितो भवति येन जनाः सरलरूपेण सर्वमपि समाचारसूचनां प्राप्नुवन्ति । एतत् मीडिया शिक्षिताशिक्षितानां सर्ववर्गाणां कृते सामान्यं वर्त्तते । ते अत्र स्वकलाप्रतिभायाः प्रदर्शनं कृत्वा स्वपरिचयं प्राप्नुवन्ति। मीडियासूचनाः, चित्राणि, आवश्यकपत्रादिकमतिसहजतया अन्येषां पार्श्वे प्रेषयन्ति।

अस्माकं भारतदेशे वयं सामाजिकप्राणिरूपेण निवसामः । अस्माकं क्षेत्रे वर्तमानसमये गणनानुसारेण २४ कोटितः ऊर्ध्वजनाः अन्तर्जालमाध्यमेन सोशल मीडिया इत्यस्य व्यवहारं कुर्वन्ति । अनेनैव स्व वाणिज्यसम्बन्धितकार्याणि सम्पादयन्ति । २०१४ तमे वर्षे भ्रष्टाचारस्य विरोधे विशालजनसमूहः अत्रैव **अन्नाहजारे** महोदयेन सार्धमान्दोलनं कृतमासीत् । निर्भया इत्यस्याः न्यायमपि अनेन माध्यमेनैव सम्भवतः जातमासीत्। अद्यत्वे तु चलवाण्या अस्य प्रयोगः इतोऽपि सुगमतां लभते । परन्तु सोशल मीडिया इत्यस्य व्यवहारे अधिकताहेतोः पारम्परिकसामाजिक पारिवारिकसम्बन्धानां मध्ये दूरं वर्धते । जनाः स्वकर्तव्यपालनेऽपि च्युताः भवन्ति । यथा यदि कुत्रापि केनापि सार्धं किमपि दुर्घटना भवति तर्हि तत्र तस्मिन् समये तस्याशुचिकित्सायाः व्यवस्थां न कृत्वा पूर्वं तस्य चित्रादिकं स्वीकृत्य तत् सोशल मीडिया मध्ये प्रसारं कुर्वन्ति । कदाचिदत्र याः

समाचाराः वयं प्राप्नुमः ताः मिथ्याभ्रामकाश्च भवन्ति ते विशिष्टव्यक्तिपरकाः वा भवन्तु राजनीतिसम्बन्धिन्ताः वा भवतु । अत्र गोपनीयतथ्यान्यपि गुप्तं न स्थीयन्ते । अतः अत्र वास्तविकतायाः लोपः दृश्यते येन सामाजिकमूल्याङ्कनाय सोशल मीडिया प्रतिबन्धिका भवति । देशेऽस्माकं नैतिकमूल्यानामतीव महत्वं विद्यते । पूर्वकाले गुरुकुलेषु विविधशिक्षानुष्ठानेषु वा नैतिकतायाः पाठं पाठयन्ति स्म, परन्तु अद्यतनीनपरिस्थित्यनुगुणं सोशल मीडिया, अन्तर्जालमाध्यमेन पठनपाठनं तु व्यापकं,सर्वग्राह्यं, सुगमं भवति । परन्तु तत्र नैतिकतायाः लोपः प्रायः दृश्यते । यथा अयोग्यचित्राणां कारणेन स्त्रीसम्मानसुरक्षां प्रति प्रश्नचिह्नमापतति । अधुना देशे प्रत्येकं होरायां १४ युवकयुवत्यः आत्महत्यां कुर्वन्ति , तत्र सर्वप्रमुखकारणं सोशल मीडिया एव यतोऽहि अस्य प्रयोगेण मानसिकशक्तिः क्षीणा भवति ।

एवमस्याधिकप्रयोगेण बुद्धिरपि क्षीणा भवति यस्य दुष्प्रभावः मानवमस्तिष्कमतीव प्रभावयति । देशे ८० प्रतिशतजनेषु अनिद्रादि दोषाः दरीदृश्यन्ते । एवमत्र नैतिकशिक्षाभावे सोशल मीडिया नैतिकमूल्याङ्कनाय प्रतिबन्धिका भवति ।

सोशल्मीडिया इत्यस्य यावन्तः गुणाः सन्ति तावन्तः दोषाः अपि सन्ति । यदि वयमस्योचितप्रयोगं करिष्यामश्चेदुचितफलमपि लप्स्यते। अपरपक्षे यदि अनुचितप्रयोगः करिष्यामश्चेत् विपरीतफलं प्राप्स्यति । अतः अस्योचितसीमितोपयोगः एव श्रेयस्करः ॥



## सूक्ष्मशिक्षणम्

**मधुस्मिता सेनापतिः**,
SS -II, ROLL NO. – 49

शिक्षायाः प्रमुखोद्देश्यं भवति सुयोगच्छात्रस्य निर्माणम् । सूक्ष्मशिक्षणं नवीनप्रविधिषु अन्यतमः इति मन्यते । नितरां स्वव्यवहारे परिवर्तनमानयति सूक्ष्मशिक्षणं कथं सैद्धान्तिकपक्षे व्यवहारस्य उत्तरोत्तरोन्नतिः भवेदिति अस्य मूलकार्यमेवास्ति । व्यावहारिकदोषान् निवारयति तदेव सूक्ष्मशिक्षणम् । प्रत्येकं च्छात्राध्यापकाय सूक्ष्मशिक्षणमाध्यमेन शिक्षणकौशलानां प्रशिक्षणप्रदानं मूलोद्धारणम् एव । विविधविधिभिः विभिन्नैः कौशलैः छात्रान् उद्बोधयति सूक्ष्मशिक्षणम् ।

**सूक्ष्मशिक्षणस्यार्थः**- विभिन्नसमूहाः पाठ्यते एतस्मिन् सूक्ष्मशिक्षणे । सर्वासु शिक्षणप्रक्रियासु अन्यतमा उपयोगिप्रक्रिया वर्तते । सूक्ष्मशिक्षणपदम् इत्यत्र द्वयमेव वर्तते सूक्ष्मं तथा शिक्षणञ्चेति । प्रत्येकं छात्राध्यापकाय सूक्ष्मशिक्षणमाध्यमेन शिक्षणकौशलानां प्रशिक्षणं प्रदीयते । सूक्ष्मशिक्षणे लघुसमूहं नीत्वा शिक्षणप्रशिक्षणं प्रचलति । एतस्मिन् सूक्ष्मपाठानां समावेशः एव सूक्ष्मशिक्षणमिति कथ्यते । अस्यां प्रक्रियायां

छात्राध्यापकः पञ्चतः आरभ्यः दशयावत् छात्रान् अध्यापयति । पञ्चनिमेषादारभ्य दशनिमेषपर्यन्तं शिक्षणं प्रचलति । शिक्षणेऽस्मिन् विषयवस्तुनः आकारोऽपि सूक्ष्मो वर्तते । शिक्षणप्रक्रिया दृश्यश्रव्योपकरणैः दीयते अनेन कार्यप्रणाली रुचिकरा भवति। अनेन छात्राध्यापकस्य कृते प्रतिषुष्ठिः लभ्यते । इदं शिक्षणं विभिन्नानां कौशलानामुपरि आधारितं भवति । छात्राध्यापकेन एषः पुनः निर्मितपाठः नवीनच्छात्राणां कृते अध्याप्यते इयम् प्रक्रिया तावत् पर्यन्तं चलति यावत् छात्राध्यापकाः कौशलेषु पारंगताः न भवन्ति ।

**सूक्ष्मशिक्षणस्य परिभाषा - वि एम् सोर्** महोदयानुसारं सूक्ष्मशिक्षणम् अल्पसमयात्मकः अल्पच्छात्रात्मकः अल्पक्रियाकलापात्मकः च कश्चन समुचितशिक्षणप्रविधिः इति ।

**एलेन्** महोदयानुसारम् सूक्ष्मशिक्षणमेकं व्यवस्थितशिक्षणं येन कक्षायाः आकार: समयसीमा च मापितुं शक्यते ।

**सूक्ष्मशिक्षणस्य विकासः -**

नवीनोपायेषु इदं सर्वोत्तमविधिः । १९३२ तमे वर्षे आमेरिकादेशस्य स्टेनफोर्डविश्वविद्यालये किय किथ एचिसन शोधच्छात्राञ्च कार्यं कुर्वन्नासीत् एचिसन् महोदयस्य मार्गदर्शको , डा रार्वर्ट एन. वुशू, डा इवाइट डब्ल्यू एलेन च आस्ताम् । भारतवर्षे सर्वप्रथम डी. डी तिवारी महोदयेन इलाहाबाद शिक्षाप्रदात्राध्ययनकेन्द्रे सूक्ष्मशिक्षणम् इति पदस्य प्रयोगः कृतः । १९५४ तमे वर्षे सूक्ष्मशिक्षणस्य विषये प्रथमप्रकाशनपाशी एवं शाह महोदयौ कृतवन्तौ । १९६८ संवत्सरे इन्दौरविश्वविद्यालये सर्वप्रथमं सूक्ष्मशिक्षणमाधारीकृत्य राष्ट्रियप्रायोजना निर्मिता जाता ।

**सूक्ष्मशिक्षणस्य सिद्धान्ताः -**

१. सूक्ष्मशिक्षणं वास्तविकशिक्षणं भवति ।

२. परन्तु शिक्षणेऽस्मिन् साधारणकक्षाशिक्षणस्य जटिलताः सरलीकृताः भवन्ति ।

३. एकस्मिन् काले कस्यापि एकस्य विशेषकार्यकौशलस्य प्रशिक्षणप्राधान्यं दीयते ।

**सूक्ष्मशिक्षणस्य प्रविधेः घटकाः -**

९. शुद्धशिक्षणस्य परिस्थितिः। २. छात्राध्यापकाः। ३. श्रवणकौशलम् । ४.प्रतिपुष्टिसाधानानि। ५. सूक्ष्मशिक्षणप्रयोगशाला ।

**सूक्ष्मशिक्षणस्य प्रक्रिया -**

अस्यां प्रक्रियायां छात्राध्यापकेन कस्यापि एकस्य शिक्षणकौशलस्य प्रयोगः क्रियते । शिक्षणेऽस्मिन् समूहेन छात्राः उपविष्टाः भवन्ति । पञ्च षड़ वा छात्रान् नीत्वा एकस्य समूहस्य निर्माणं क्रियते। स्वात्मिका तथा उत्कृष्टा प्रक्रिया इति विधीयते । अध्यापनार्थं बालकेभ्यः पञ्च षड् वा निमेषेषु एका पाठयोजना निर्मातव्या छात्राध्यापकेन । दीयमानसूक्ष्मशिक्षणरूपपाठं निरीक्षकैः छात्राध्यापकैः दृश्यश्रव्योपकरणैः क्रियते स्वयं तैः दृश्य श्रव्यमुद्रणयन्त्रमाध्यमैः स्वस्य शिक्षणप्रक्रिया द्रष्टुं शक्यते। तेषां गुणदोषान् निरीक्षकाः निरीक्षन्ते । सः पुनः निरीक्षकेभ्यः प्रतिपुष्टिं गृह्णाति ।

**सूक्ष्मशिक्षणस्य सोपानानि** -

१. सूक्ष्मपाठयोजना (Lesson plan) २. शिक्षणम् (Teaching) ३. प्रतिपुष्टिः (Feed back) ४. पुर्नयोजना (Re-plan) ५. पुन: शिक्षणम् । (Re-teaching) ६. पुनः प्रतिपुष्टिः (Re-feedback)

**सूक्ष्मशिक्षणस्य महत्त्वम् -**

१. छात्राध्यापकानां शिक्षणकौशलस्य प्राप्तये सूक्ष्मशिक्षणं साहाय्यं भवति २. अस्मिन् कार्यक्रमे छात्राध्यापकेन प्रथमसूक्ष्मपाठयोजना निर्मीयते। ३. लघुसमूहे एकस्मिन् काले कस्यापि एकस्य कौशलस्य प्रयोगो भवति। ४. पाठ्यवस्तु कौशलाधारेण प्रस्तूयते। ५.कक्षाशिक्षणानन्तरं प्रतिपुष्टेः व्यवस्था अस्ति।

**सूक्ष्मशिक्षणस्य गुणाः -**

१.सूक्ष्मशिक्षणं वैयक्तिकपठनस्य कौशलविकासस्य एकः नूतनविधिः २. लघु-लघु-समूहेषु पाठः पाठ्यते ३. सूक्ष्मशिक्षणे छात्राध्यापकः चित्रैः कौशलं पाठ्यति। ४. पुनः पुनः शिक्षणेन छात्राध्यापकस्य आत्मविश्वासो वर्धते।



# ONLINE LEARNING

**Sarita Nayak**,

SS- 2, Roll No.-35

Now a days online learning became a part of our learning process. Due to the ongoing pandemic there are some restrictions on physical classes.

Online learning classes having too much advantages as it is accessible from anywhere and anytime with advance technology all can able to seat in the class and do learn.. There is no Physical interaction for that there is no threat from covid. Varieties of classes not only study , but also dance, sing, art musical Instrument, yoga, Karate classes are going through online respective of time.

- Jack messman says-"online learning is rapidly becoming one of the most cost-effective ways to educate the world's rapidly expanding work borce.

- Bill Gates says "Technology is just a tool. in terms of getting the kids working together and motivating them, the teacher is the most important

We don't need to go outside for it & make gatherings. We can safely learn it from our home. It improves retention quality among students. It explains concept, theories in the form of videos images, documentation descriptions.

- George, Couras says - "Technology will not replace great teachers but technology in the hands of great teacheres can be transformational. "

But like physical classes it can't be available by all as it requires some prerequisites like smart Phones, laptops, desktops, smart gadgets good internet connection, net packages etc..

Excess use of these gadgets lead may laxiness less social interaction, some health issues, But it we use it in a positive mannere it will save us from pandemic and from illiterate. We can also successful in life if we do. it correctly.

-Hercberet Simon says "There are no morals about technology at all. Technology expands our ways of thinking about things, expands our ways of doing things. If we're bad people we use technology for bad purposes and it we're good people We use it for good purposes."।



## सतीदाहप्रथा

**मीनकेतन साहु,**
SS-II, Roll No. – 21

**उपक्रमः-**

पुरातनकालात् आरभ्य इदानीं पर्यन्तं सर्वदा समाजः परिवर्तनशीलः भवति। अस्मिन् समाजे सर्वदा बलशाली उच्चवर्गीयाः नीचवर्गीयोपरि अत्याचारं कुर्वन्ति। समाजे बह्व्यः समास्याः भवन्ति। यथा :- बालविवाहः, जातिप्रथा, सतीदाहप्रथा, असमानता, अस्पृश्यता, धार्मिकता इत्यादयः दरिदृश्यन्ते । इतोऽपि कलुषितसाम्प्रतिकसमाजेऽपि समाजिकसमस्याः दरिदृश्यन्ते । यथा :- जनिवादः, दहेजप्रथा, बालविवाहः, साम्यवादः, धार्मिकहिंसाः, योनतिर्यातना, किशोरापराध, वैवाहिकबलात्कारः इत्यादि । सामाजिकसमस्यानां दूरीकर्तुं अस्माकं संविधानमध्ये "6" षट् मौलिकाधिकाराः प्रदत्ताः । येषां माध्यमेन वयं मौलिकाधिकारार्थं सर्वकारस्य द्वारस्थाः भवितुं शक्नुमः। समाजे समस्याः पश्यामः चेत् नारीनिर्यातना सर्वदा प्रचलति। पुरुषाः नरीणाम् उपरि असहनम् अत्याचारं च कुर्वन्ति । तासाम् अधिकाराणाम् उपरि प्रभुत्वं दर्शयन्ति। इतोऽपि सामाजिकस्तरे शैक्षिकराजनैतिकक्षेत्रे नारीणां परस्वप्रभुत्वं वा समानाधिकाराः न दीयन्ते । एवं प्रकारेण पुरातनकाले सतीदाहप्रथा नाम्नि एका प्रथा आसीत्। तस्मिन् विषये किंचित् विस्तृतरूपेण जानीमः ।

**सतीदाहप्रथा -**

सतीदाहप्रथा भारतीयसमाजे प्रचलितेषु बहुविधकुसंस्करेषु अन्यतमः भवति। भारतीयसमाजे पुरातनकाले बहुविधा धार्मिकप्रथा प्रचलिता आसीत् । तासां मध्ये सतीदाहप्रथांयां पुरुषस्य मृत्युः अनन्तरं तस्य पत्नी पुरुषस्य दाहनशय्यायां मध्ये स्वयमेव प्रविश्य जीवनोत्सर्गं करोति स्म। तत् सतीदाहप्रथा इत्युच्यते।

**सतीदाहप्रथायाः समयः-**

अस्याः प्रथायाः प्रारम्भः कदा जातः इति पश्यामः चेत् वैदिककालात् एव प्रारम्भः इति वक्तुं शक्यते । अर्थात् समयः तु निश्चितः नास्ति परन्तु वैदिककाले राज्ञां मध्ये विभिन्नता कारणेन युद्धं भवति स्म। युद्धे यस्य राज्ञः मृत्युः भवति तस्य पत्नी स्वात्मसम्मानं रक्षणार्थं पत्युः चिताग्निमध्ये स्वयं जीवन्ती प्रवेशं करोति स्म । इतोऽपि शोधकर्तारः वदन्ति इयं प्रथा मुस्लिमकाले एव दृश्यमानः इति । एवं एका बहुप्रसिद्धा उदाहरणमस्ति पद्मावती कथा । एकदा आल्लउद्धिन खलिजी पद्मावतीं दृष्ट्वा आसक्तो जातः एवं पिचाडवंशस्य ध्वसं कृतवान् । पद्मावतीं प्राप्तुं राजानं बन्धीमकरोत् । एतत् दृष्ट्वा राज्ञी पद्मावती आत्मसम्मानं रक्षार्थं स्वशरीरम् अग्निना दग्धं कृतवती तथा अग्नौ प्रविश्य प्राणोत्सर्गं कृतवती |

**प्राचीनकाले का नाम सती :-**

सतीदाहप्रथा मध्ये सती नाम कथमागता इति पश्यामः चेत् पुराणकाले देवी सती स्वपत्युः तिरस्कारः स्वपितुः दक्षात् दृष्ट्वा यज्ञस्य अग्नेः मध्ये प्रविष्टवती। अतः तस्मात् दिनात् एव सतीदाहप्रथा नामकरणं जातम्। कारणम् - पुरातनकाले चरित्रम् आत्मसम्मानं च मुख्यमासीत्। अतः नार्यः स्वात्मसम्मानार्थं स्वजीवनम् अग्नौ समर्पयन्ति स्म।

**सतीदाहप्रथायाः लोपः -**

सतीदाहप्रथायाः अस्तं जातमिति पश्यामः चेत् ब्रह्मसमाजस्य संस्थापक: राजाराममोहनरायः समाजे सतीप्रथां विरुध्य प्रथमं योगदानं कृतवान् । फलस्वरूपं शनैः शनैः एकम् आन्दोलनरूपे संपूर्णं समाजे प्रसारिता एतत् । एवम् अन्तिमे तत्कालिन - इंग्लिससर्वकारः लैर्ड विलियम बेण्टिक 1829 तमे वर्षे सतीदाहप्रथां समाप्तं कर्तुं एकं नियमं प्रणयनं कृनवान् । एवम् अन्तिमं सतीदाहप्रथा समाप्ता संजाता ।

**उपसंहारः** –

इयं सतीदाहप्रथा अतीव कुप्रथा आसीत् । इयम् असहयनारीणाम् उपरि हत्याचारः भवति स्म । यद्द्वारा बहुनारीणाम् अकालीनमृत्युः अभवत् । अशिक्षितसमाजकारणात् इयं परिस्थितिः आगता आसीत् ।



# संस्कृताध्ययने शिक्षकस्य स्थानम्

**स्मिता वि.,**
SS -II, Roll No. – 55

सर्वे अध्यापकाः पूजनीयाः एव तत्र नास्ति सन्देहः । अतः कथयति यत् शिक्षा नाम रेलयानस्य यन्त्रस्थाने तिष्ठति शिक्षकः इति । तस्य गतिः एव शिक्षाक्षेत्रस्य गतिः । यत्र कुत्रापि स्थगयति चेत् याने विद्यमानानां सर्वेषां (छात्राणां ) लक्ष्यप्राप्तिः न भवत्येव । तद्वत् संस्कृतभाषायाः संरक्षकाः गतिनिर्धारकाः संस्कृतशिक्षकाः भवन्ति। अस्माकं जीवने कानिचन तत्त्वानि पालनीयानि भवन्ति । तानि तत्त्वानि न सन्ति तर्हि जीवनमपि आस्वादार्हं न स्यात् तद्वत् संस्कृतशिक्षणे विद्यमानानि तत्त्वानि पालनीयानि येन संस्कृतस्य गतिः सरला भविष्यति ।

संस्कृतभाषायाः अधोगृहनिर्मातारः संस्कृतशिक्षकाः एव । कार्यसमये (शिक्षणसमये) प्रत्येकं शिक्षकः प्रतिक्षणं चिन्तयन् भवेत् । शिक्षकस्य प्रत्येकं संस्कृतवाक्यकथनं संस्कृतभाषायाः पुनरुज्जीवनाय भवेत् । छात्राणां मनस्सु संस्कृतविषयकरुच्युत्पादनाय संस्कृतशिक्षकः सर्वदा उत्साही सक्रियः च भवेत् । नित्यं संस्कृतभाषया छात्रान् सर्वान् आकर्षयेत् । छात्राः सर्वदा मित्रैः सह क्रीडितुम् इच्छन्ति, तत्र तेषाम् इच्छा प्रदर्शयन्ति च । अतः प्रतिदिनं संस्कृतभाषायां कामपि भाषाक्रीडां कक्ष्यायां द्वित्रिनिमेषान् कारयति तर्हि झटिति छात्राः संस्कृतम् अवगच्छन्ति । संस्कृताध्यापकाः संस्कृतशरीरे प्राणवायुसञ्चारकाः भवन्ति कक्ष्यायां संस्कृतवाक्यानां प्रयोगं कारयित्वा प्रोत्साहनं च तैः करणीयम् । एवमेव मार्गदर्शकाः स्युः संस्कृताध्यापकाः । भाषायाः नाम भवति संस्कृतम्। भाषणम् अस्ति चेदेव भाषा । अतः भाषा मुखे भवेत् । संस्कृतशिक्षकाः छात्रेषु संस्कृतभाषया वक्तुं श्रोतुम् अवसरः कल्पनीयः। संस्कृतकक्ष्यायां सर्वैः छात्रैः शिक्षकैः च संस्कृतभाषा सहजतया सरलतया प्रवाहतया च व्यवह्रियमाणा भवेत् । तदा एव संस्कृतभाषा विद्यालये प्रतिदिनं सर्वेषां स्मृतिपथं प्रति आगच्छति । संस्कृतभाषा आधुनिकभाषा अस्ति इति कथयति परन्तु अधिकतया साहित्यिकभाषारूपेण संस्कृतस्य पठन-पाठनं क्रियते , यदि संस्कृताध्ययने संस्कृताध्यापकः कतिपय वैज्ञानिकविषयान् संस्कृतभाषया बोधयति तर्हि आधुनिकत्वं स्वतः आयाति । अतः एव संस्कृतशिक्षकाः संस्कृतस्य गतिनिर्धारकाः इति उच्यन्ते ।

संस्कृतं कठिनम् उत सरलं वाचिकम् ,उत ग्रान्थिकं ब्राह्मणानां भाषा, उत व्यवहारभाषा इत्यादि संशयनिवारणाय संस्कृतशिक्षकाः सदा गम्भीरतया चिन्तयेयुः।



# विधिरहो बलवान्

**Kaushal Kumar Jha,**
SS -II, ROLL NO. – 25

विधिर्भाग्यम् - भजनीयमर्थात् भोक्तव्य, अनेन जायते यत् पूर्वजन्मकृतानि तानि कर्माण्येव विधिभिरिह जन्म प्रारब्धं वा अर्थात् फलोन्मुखफलदानोदयतप्रारब्धफलं वा एकमेव विधिर्नाम। तस्मात् प्रारब्धमित्यपि तस्य पर्यायेष्वेकं यत प्रारब्धस्य भोगं विना नाशो नैव भवति यतश्च तस्य फलमनिवार्य नियत च अतो नियतिरित्यपि तस्य पर्यायः । यत कृतकर्मणामनिवार्यफलं फलमत उपपते" इति वेदान्तसिद्धान्तानुसारं परमात्मादिष्टमेव परमेश्वरनियंत्रितमेव मिलति तस्माद् देवेन कृत दैवमिति दिष्टमिति चापि विधे पर्यायौ। "पूर्वजन्मनि कृतं कर्म तद् दैवमिति कथ्यते इति सर्वथा साधु। परिभाषितदैवविधिर्वा एकविधायाः वस्तुस्थितिः विधेर्भाग्यस्य वा बलीयस्त्वं सुसिद्धं नैतद् विवादस्य विषय अस्मादेव कारणात् अस्मिन् विषये मनीषिणामूणिमहर्षीणाम् आचार्याणां, कवीनां चानेका उक्तयो अनादिकालेभ्यो लोके प्रचलिताः यथा -

**विधौ विरूद्धे न सुधा सुधाकरे। न हेम हेमप्रभवे गिरावपि ॥**

**भाग्यानि पूर्वतपसा रवलु सचिन्तानि। काले फलन्ति पुरुषस्य यथैव वृक्षाः।**

"अथवा भवितत्वयानां द्वाराणि भवन्ति सर्वत्र शुभं च विदधात्यशुभं च जन्तो। सर्वन्कया भगवती भवितव्यतैव।"

इत्यादयोः एव स्पष्ट यद्धर्तमानजन्मनो घटनावृतानि वा पूर्वतो निर्धारितानि तान्यवश्यमेव घटेयुः । किन्तु यदि विधिदैव वा कर्मण एवं फल, तर्हि भाविभाग्यमुत्कृष्ट कर्तुमस्मिन् जन्मनि भव्यानि कर्माणि करणीयान्येव पुनश्च शरीद्यग्यात्रापि च ते न प्रसिदध्येदकर्मणः॥

नहि कश्चित् क्षमपि जातु तिष्ठत्यकर्मकृत, कार्यते यवश कर्म सर्व प्रकृतिवर्गुणैः।

इत्यादि भगवदुक्ते कर्मस्य जीवनस्याधार एव सिद्ध्यति।

एतद्विना न किन्चित् सेत्स्यति न हि सुप्तस्य सिंहस्य प्रविशन्ति मुखे मृगा इति सत्योक्तिः।

**शशिदिवाकरयोग्रहपीडनगजभुजमयोरपि बन्धनम्। मतिमाता च विलोक्य दरिद्रता विधिरहो बलवानिति ये मति ॥**

इति एव सत्यपि एतत्तु तावदवश्यमेव स्वीकरणीय यदप्रत्यात्ये यस्याहपि दैवस्य दिष्टस्य वा फलं प्राप्तुं प्रयत्नो विधेय एव समुदायोगः करणीय एव अस्मिन् विषये महाभारतस्य स्पष्टसाक्ष्यं लभ्यते।

नगण्य स्यादित्येव सती नीति, यत् कथमपि निवारमितुं नैव शक्यते तदर्थं किमर्थं क्रियेत चिन्ता, सत्कर्मणा सदुदयोगेन पूततपसा च तद् यदि सर्वथा निष्फल मोघ वा कर्तुं न शक्यते तदपि तस्य कटुफल किन्चिन्नयुन क्रियेतेति सम्भाव्यम्।

**उद्यमेन हि सिध्यन्ति कार्याणि न मनोरथैः।**

**न हि सुप्तस्य सिंहस प्रविशन्ति मुखे मृगाः ॥**

सर्वाथा व्यवसीदन्ति व्यसन चाधिगच्छति। वीरा सम्भावितात्मानो न दैव पर्युपासते ॥ यिक्लवो वीर्यहीनो य स दैवमनुवर्तते। एतस्मात् सर्वस्मा दिदमेव प्रमाणित भवति यत् सत्यपि दवे न प्रधान्य तस्मै देयमपितु वीर्यमुत्साह चाजित्य दैन्याराहित्येन कर्मवानुहठेयम्।



# संस्कृते विमानशास्त्रम्

**Upendra Sahu,**
SS -II, Roll No. – 20

उपक्रम: - संस्कृतसाहित्ये वेदानां स्थानं सर्वोपरि वर्तते । अखिलभूमण्डलेऽस्मिन् समुपलब्धेषु विविधभाषागतप्राचीनग्रन्थेषु वेदः सर्वेभ्यः प्राचीनतमः इति सर्वैरङ्गीक्रियते । वेदे विद्यमानमन्त्रेषु विमानम् इति पदस्य प्रयोगः अस्ति । तस्यार्थः भवति अधिष्ठाता, व्यवस्थापकादि । यथा- रजसो विमानं रथम् (ऋ. २.४०.३) । इतोऽपि संस्कृतसाहित्ये महाराजभोजस्य कृते "समरांगणसूत्रधारम् एवं भरद्वाजस्य कृते 'यन्त्रसर्वस्वी' ग्रन्थस्य अन्तर्गत "वैमानिक प्रकरणे" विमानशास्त्रस्य वर्णना अस्ति।

**विमानस्य भेदः -**

विमानस्य भेदत्रयमस्ति। यथा- यान्त्रिकः तान्त्रिकः एवं च कृतकः । मन्त्रशक्त्या चलितविमानं मान्त्रिकविमानम् । अस्य २५ प्रकाराः सन्ति । यथा- पुष्पकं, भीष्मः, शंकरादि। तन्त्रशक्त्या चलितविमानं तान्त्रिकविमानमिति अस्य ५६ प्रकाराः सन्ति । यथा -भैरवः, नन्दनः, व्याघ्रमुखादि । सामान्यविमानं कृतकः इति। अस्य २५ प्रकाराः सन्ति । यथा- शकुनं, सुन्दरं, केकमकं, मण्डलं, हंसादि ।

**पंचविंशन्मान्त्रिकाः पुष्पकादिभेदेन |**
**भैरवादिभेदात् तान्त्रिकाः षटपंचाशत् ।**
**शकुनाद्याः पंचविंशत् कृतका :।**

**ऋग्वेदे विमानस्य वर्णना -**

**सोमापूषणा रजसो विमानं सप्तचक्रं रथमविश्वमित्वम् विषूवृतं मनसा युज्यमानं ...। पंचरश्मिम् (ऋग्.** - २.४०.३ )

अर्थात् - अस्मिन् विमाने सप्तचक्रयुक्ताः, पञ्चरश्मियुक्ताः ( इंजन्) दिव्यरथस्स (Air. Ship) वर्णनास्ति।

**स्वचालितविमानस्य वर्णना -**

ऋग्वेदे मरुतदेवस्य स्वचालितान्तरिक्षगामीयानस्य (Automatic Air bus) वर्णना अस्ति ।

**अनेनो वो मरुतो यामो अस्तु, अनश्वश्चिद् यमजत्यरथीः ।**
**अनवसो अनभीशू रजस्तूः वि रोदसी पथ्या याति साधन् ॥** (ऋग् ६ ६६.७)



# भारतस्य सांस्कृतिकभाषा

**Suchitra Muduli,**
SS -II, Roll no -15

अधुना मातृभाषा, राष्ट्रभाषा ,राज्यभाषा, लोकभाषा इत्यादि विविधनामाभिः एव भाषाः ज्ञायन्ते । परन्तु संस्कृतभाषा तु देवभाषा, पौराणिकभाषा- सहजशास्त्रियभाषा इत्यादि नाम्ना प्रसिद्धा अस्ति एव । संस्कृतस्य अस्तित्वम् अद्यतन आवश्यकता वा केवलं पूर्वोक्तनामभिः प्रसिद्धं भवतु इति न अपि तु भारतस्य सांस्कृतिकभाषा इति एव भवतु इति भारतस्य उच्चतमन्यायालयेन अपि एतत् स्वीकृतम् अस्ति ।

सर्वाः अपि भाषाः स्वसंस्कृतेः प्रसारार्थं विद्यमानाः उपायाः भवन्ति इति भाषाशब्दनिर्वाचनतः अवगम्यते । तथा संस्कारस्य परम्परापरिवर्तनमेव भाषायाः मुख्यलक्ष्यम् | मलयालं मलयालसंस्कृतिं, कन्नड कर्णाटकसंस्कृतिं, हिन्दी हिन्दीसंस्कृतिम्, आंग्लम् आंग्लेयसंस्कृतिं च निरन्तरं प्रसारयन्ति । भारतीयसकलभाषाणामपि स्वरसंस्कारान् सर्वान् अपि संरक्ष्य सनातनसंस्कृतिं सर्वत्र सम्प्रसारयति सर्वभाषाणां जननी इयं संस्कृतभाषा । भाषाशास्त्रदृष्ट्या अपि सर्वासु भाषासु ५०% तः ९०%. यावत् संस्कृतशब्दाः सन्ति । अतः संस्कृतभाषया प्रचलिता संस्कृतिः कीदृशी भवतीति अवलोकनं न भवति । संस्कृतव्याकरणादिघटनाविषयेषु, साहित्यादिग्रन्थेषु च भारतीयसंस्कृतिः प्रवहति । स्वदेशो भुवनत्रयम्, वसुधैवकुटुम्बकम्, मातृदेवो भव, पितृदेवो भव, आचार्यदेवो भव, अतिथिदेवो भव, श्रुतिधारिता, परोपकारकेन्द्रिता च सनातनभारतसंस्कृतिः एव। संस्कृते विद्यमानपरस्मैपदि, आत्मनेपदि, उभयपदि इत्यादि संङ्कल्पः अपि परिशीलनीयः। संस्कृते विद्यमानानां सकलधातुनामपि विभाजनं कृतमस्ति । परस्मैपदी इत्युक्ते परस्मै - परोपकाराय पदं - पदविन्यासः अस्य अस्ति इति पदी । आत्मनेपदी स्वस्य निमित्तं क्रियमाणप्रवृत्तिः । उभयपदी इत्युक्ते परोपकाराय, स्वस्मै एवम् अन्यस्मै एषा क्रिया भवति । साहित्यविषयमधिकृत्य चिन्तयति चेत् रामायणमहाभारतपुराणानि अन्यकृतयः च अस्माकं संस्कृतेः वाहकानि इति अवगन्तुं शक्यते । कविकुलगुरोः कालिदासस्य कृतिं पठन्ति चेत् सांस्कृतिकजीवनाय प्रचोदनं प्राप्नुवन्ति । नित्य -नैमिनिकाचारद्वारा अपि संस्कृतस्य सम्बन्धः वर्तते। यथा- उषः काले उत्थाय –

**"कराग्रे वसते लक्ष्मीः करमध्ये सरस्वती ।**
**करमूले तु गोविन्दः प्रभाते करदर्शनम् ।**

अयं श्लोकः संस्कृतवाङ्मये अपि संस्कृतिम् उच्चस्तरं प्रापयति । एवं संस्कृतभाषा सर्वदा सर्वथा सनातनसंस्कृतेः वाहिनी इति सुविदितम् एव । अत एव पूर्वऋषयः एवं गीतवन्तः - भारतस्य प्रतिष्ठे द्वे संस्कृतं संस्कृतिस्तथा इति । भारतस्य संस्कृतिनामककमलस्य विकासाय संस्कृतस्य सूर्यस्य विकासः अनिवार्यः भवतु । न केवलं राज्ये राज्ये संस्कृतस्य प्रचारः अपि तु सम्पूर्णभारतवर्षे सांस्कृतिकरूपेण भवतु ।



# गुरुशिष्यपरम्परा

**सुधीर वनछोर,**
SS – II, Roll No. – 50

**उपक्रमः –**

गुरुशिष्यपरम्परा अध्यात्मिकपूजायाः नूतनं किञ्चनसोपानं वर्तते । भारतीयसंस्कृतौ गुरुशिष्यपरम्परा अन्तर्गतः गुरूः स्वीयशिष्याय शिक्षां ददाति स्म | क्रमोऽयं एवमेव चलति स्म । अनन्तरम् असौ शिष्यः गुरुरूपेण अन्येभ्यः शिक्षां ददाति स्म । परम्परायां सनातनधर्मणः सर्वत्र मिलन्ति । गुरुशिष्ययोः इयं परम्परा ज्ञानस्य कस्मिन् अपि क्षेत्रे भवितुमर्हति । यथा आध्यात्मं,संगीतं, कला, वेदाध्ययनं, वास्तुशास्त्रादिकम्। भारतीयसंस्कृतौ गुरोः महत्स्थानं वर्तते। कुत्रचित् गुरुः ब्रह्म, विष्णुः, महेश्वरः इति नाम्ना कथ्यते । अन्यत्र कुत्रचित् गोविन्दः इति। "सिख" शब्द : संस्कृतस्य शिष्य इति शब्दात् उत्पन्नः । 'गु' शब्दस्य अर्थः अन्धकारः(अज्ञान) एवं "रु" शब्दस्य अर्थः प्रकाशः (ज्ञानं) । अज्ञानं यः नाशयति, सः ब्रह्मरूपी प्रकाशः सः भवति गुरुः । आश्रमेषु गुरुशिष्ययोः परम्परायाः निर्वहणं भवति स्म। भारतीयसंस्कृतिः गुरोः भूमिका । भारतीयसंस्कृतौ गुरोः स्थानम् ईश्वरो मन्यते।

**"गुरुर्ब्रह्मा गुरुर्विष्णुः गुर्देवो महेश्वरः ।**
**गुरुः साक्षात् परं ब्रह्मा तस्मै श्री गुरवे नमः ।"**

प्राचीनकाले गुरुः एवं शिष्यः अनयोः सम्बन्धस्य आधारः, गुरोः ज्ञानं, मौलिकता, नैतिकबलं च शिष्यं प्रति स्नेहभावः तथा ज्ञानप्रदानस्य निस्वार्थभावः च शिक्षके भवति स्म । गुरुं प्रति पूर्णश्रद्धा, गुरोः क्षमतायां पूर्णविश्वासः तथा च गुरुं प्रति पूर्णसमर्पणम् एवम् आज्ञाकारी अनुशासनशिष्यः सर्वोकृष्टः मन्यते । आचार्यचाणक्येन एकः आदरः छात्रस्य गणविषये उक्तं यत् -

**काकचेष्टा बकध्यानं श्वाननिद्रा तथैव च ।**
**अल्पहारी गृहत्यागी विद्यार्थी पञ्चलक्षणम् ।।**

गुरुशिष्ययोः मध्ये केवलं शाब्दिकज्ञानस्य आदानप्रदानं च भवति स्म । किं च गुरुः स्वीयशिष्यस्य संरक्षक इव कार्यं करोति । तस्य उद्देश्यं भवति गुरुः कदापि तस्य अनिष्टं चिन्तनं कर्तुम् एव न शक्नोति इति । विश्वासोऽयं गुरुं प्रति तस्य अपूर्वश्रद्धा एवं समपर्णस्य कारणं भवति स्म । गीतायां भगवता श्रीकृष्णेन गुरुशिष्यपरम्परायां " परम्परया प्राप्तयोगः" इति कथितम् अस्ति । गुरुशिष्ययोः परम्परायाः आधारभूतसांसारिकज्ञानात् प्रारम्भः भवति परन्तु अस्यै चरमोत्कर्ष आध्यात्मिकशाश्वतानन्दप्राप्तिः वर्तते । सा च ईश्वरः प्राप्तिः वा मोक्षप्राप्तिः इत्यपि कथ्यते । महता भाग्येन प्राप्तुं तस्य मानवजीवनस्य एतद् एव अन्तिमसर्वोच्चलक्ष्यम् अपेक्षितं वर्तते । गुरुः एकः प्रदीपः विद्यते, शिष्यः तु प्रकाशः।

**वर्तमानस्थिति :-**

इदानीं परिस्थितौ गुरुः शिक्षकः एवं शिष्यः छात्रः भवति । गुरुशिष्ययोः मध्ये केवलम् औपचारिकः अथवा व्यवसायिकसम्बन्धः एव अस्ति । चिकित्सा, व्यापारादि सदृश्यं शिक्षणम् अपि एकः व्यवसायः भवति वर्तमानपरिस्थितौ।

**उपसंहारः -**

भारतीयसंस्कृतिः सामाजिकव्यवहारे च गुरूणां सामाननीयस्थानं वर्तते। गुरुर्ब्रह्मा, गुरुर्विष्णुः, गुरुः देवो महेश्वरः: इति मन्यते। गुरूणां यः सम्मानस्वरूपचरित्राणां महानता एवं विद्याजीवने अत्यन्तं महत्वम् अस्ति, अस्य कारणात् प्राप्तिः जातः गुरोः। तादृशोपरि श्रद्धास्थापनाय संस्कारः शिष्याय परिवारतः प्राप्यते।



# गुरवो भवेम

**मनु के. बि.**,
SS- II, Roll No. – 02

**गुरोः परतरं नास्ति** इत्येव आर्षसङ्कल्पः।अतः एव भारतीयसंस्कृत्यनुगुणं यो जीवति तस्य जीवने गुरोः स्थानं प्राध्यान्यं च अनुपमं भवति। गुरोः माहात्म्यं वक्तुं एकेन लेखनेन वा काचित् वाचा वा न शक्यते। वेदैरारभ्य बहुविधेषु वाङ्मयेषु गुरुमहिमानमधिकृत्य अतीवचारुतया उक्तमस्ति। अज्ञानं नाम घोरान्धकारस्य नाशनं कृत्वा कृपासहित ज्ञानदीपप्रदानेन बुद्धिं सूर्यादपि शोभायमानं करोति गुरुः।

लौकिकालौकिकविषयान् स्वानुभवज्ञानसहितं शिष्येभ्यः बोधयितुं समर्थो भवति गुरुः। एवं शिष्यस्य बुद्धौ वर्तमानमोहाहङ्कारादि अज्ञानविषयान् स्वयं दूरीकर्तुं तस्मै एव शिष्याय सिद्धतां प्रददाति। केवलं स्वाभिप्रायेण शिष्यस्य परिवर्तनं न करोति गुरुः, प्रत्युत शिष्यस्य आत्मबोधमुद्दीपयितुं तं सज्जीकरोति । लौकिकजीवनं तु प्रवृत्तिमार्गो भवति तत्र अन्तःकरणं बहिर्मुखमेव भवति, अलौकिकं नाम निवृत्तिमार्गः एव तत्र अन्तर्मुखता तेन शान्तिश्च भवति। उभयत्रापि फलसिद्धये गुरुकृपायाः अत्यावश्यकता भवति निश्चयेना तां विना सर्वं निरर्थकम् अलक्ष्यं च भवति।

सत्यान्वेषणं नाम एका वैज्ञानिकयात्रा भवति। एतस्यां यात्रायां गुरुरेव मार्गदर्शकः भवति । अत्र ' गुरुर्विना गतिर्नास्ति ' इत्युक्तिः प्रसिद्धैव । कस्यामपि अवस्थायां सुखे वा दुःखे वा सम्पत्तौ वा विपत्तौ वा आवश्यकज्ञानं दत्वा शिष्यस्य जीवनं प्रकाशमयं करोति गुरुः। एवं मनुजं कैवल्यं प्रति गन्तुं सदा यो वा प्रेरयति स एव सद्गुरुः। समयेऽस्मिन् गुरुशिष्ययोर्मध्ये आत्मैक्यं जायते । एवं च शुद्धज्ञानप्रकाशरूपेण शिष्यस्य बोधे सर्वदा गुरुः जाज्वल्यमानः भवति । एतन्मूलम् एकस्य चिन्तने अपि प्रभावं जनयितुं गुरुणा शक्यते । तथा स्वान्तर्विराजमानं सद्गुरुं ये न जानन्ति तेभ्यः एव गुरुः बाह्यरूपेण कृपावर्षणं करोति । स्वस्य बुद्धौ प्रकाशमानः आत्मबोधः एव बाह्यरूपं स्वीकृत्य अक्ष्णोः पुरतः तिष्ठतीत्यज्ञात्वा शिष्यः सर्वदा गुरवे बाह्यमानदण्डान् कल्पते। तथापि गुरोः स्वात्ममन्दहासेन शिष्यस्य अज्ञानघनयूथस्य क्षयो सम्भवति। ईदृशानां गुरूणाम् अत्यन्तापेक्षता भवति अस्मिन् विश्वे सर्वत्र तथापि ९९% अधुनिकशिक्षकाः तदर्थं न पारयन्तीति सत्यमेव।

आधुनिके काले केवलजीवनोपाधिप्राप्तये मनुजाः इतस्ततः भ्रमन्तः सन्ति। जीवनस्य शाश्वतलक्ष्यस्य प्रस्तावनां यः करोति सः समाजे परिहासपात्रो भवतीति दुर्दशा अपि अयातमस्ति।अद्य गुरुरिति सामान्यजनान् पृच्छामः चेत् उतरं लभ्यते यत् - क्षौमाम्बरं, कटककटिसूत्र- सुवर्णयुक्तरुद्रक्षादिकं च धृत्वा कोटिरूप्यकाणां याने यात्राम् एवं राजकीयभवनेषु आध्यात्मिकनामाङ्कितसंस्थासु च यो वा वासं करोति, पुनः वार्त्तामाध्यमेषु दुर्ग्राह्यपदैः यो वचोवमनं करोति,मध्ये मध्ये ईषत् योगासनानां प्रदर्शनं च यः करोति स एव भवतीति। वास्तविकतया अद्य धनस्य एव गुरुता जाता। केवलधनलाभाय सुखभोगाय च केचन गुरुवेषं धृत्वा किमपि किमपि वदन्ति कुर्वन्ति च। यथा आचार्यभगवदपादैरुक्तं चर्पटपञ्चरीकायां-

**जटिलो मुण्डी लुञ्चितकेशः काषायाम्बरबहुकृतवेषः।**
**पश्यन्नपि च न पश्यति मूढः उदरनिमित्तं बहुकृतवेषः ॥**

अद्य शैक्षिकक्षेत्रेऽपि अध्यापकानां श्रद्धा धनार्जननिमित्तमस्ति इति अध्यापनप्रक्रियायां कलङ्कः भवति। धनार्जनं तु भवेदेव परन्तु अतीवलोभतया केवलधनलाभनिमित्तं शिक्षकाः कार्यं कुर्वन्तीति

अत्यन्तमूल्यच्चुतिं जनयति। अतः ईदृशशिक्षकाः सर्वदाऽपि समाजवृद्धये अपकारकाः एव भवन्ति। शिक्षाशास्त्रमधीत्य सामाजस्य धार्मिकोद्धारणं शाश्वतपरिवर्तनञ्च भवति शिक्षकस्य प्राथमिकदायित्वम् । परन्तु अधुना केचन कथञ्चिदपि प्रमाणपत्रं सम्पाद्य प्रयुताधिकधनं दत्वा वा विद्यालये उद्योगं प्राप्नुवन्ति । पुनः केवलं पाठ्यपुसके यदस्ति तस्य पाठनं कृत्वा प्रभूतं धनं सम्पादयन्ति । एवमध्यापनं नाम एक वैश्य - वृत्तिवत् जातमस्ति। विषयोऽयं समाजे अत्यधिकसमस्याः जनयतीति स्मर्तव्यम् । अतः इदानींतन काले अध्यापकः इति पदं कदापि गुरुरिति पदस्य समानपदं न भवति। पुस्तकेषु गुरुरिति पदस्य समानपदरूपेण - अध्यापकः,शिक्षकः,Teacher,master,Lecture... इत्यादयः द्रष्टुं शक्यन्ते। तत्तु अयोग्यमेव भवति। गुरुरिति पदस्य अर्थव्याप्तिः तत्स्थानस्य महिमायाः अपारता च कदापि अत्रोक्तपर्यायपदानां समानं न भवति। एकः शिक्षाशास्त्रादिकमधीत्य प्रमाणपत्रलाभेन अनन्तरक्षणे एव गुरुर्भवति इति कदापि न। तन्निमित्तं बहुप्रयत्नः इतोऽपि अत्यधिकोऽस्ति । किञ्च विद्यालये पाठ्यक्रमे यदस्ति तेन छात्राणां जीवनं कदापि सम्पूर्णतां न याति । तदा अध्यापकः एकैकविषयमपि व्यक्तोदाहरणैः, स्वानुभवैः, स्वाभिप्रायैः च सहितं जीवने कथमुपकरोति इत्यपि संसूच्य पाठयति चेत् छात्राणां जीवनप्रगत्यै प्रभावो भवति ।

समानकक्षायां पठन्तः चेदपि मानसिक-बौद्धिकस्तरेषु छात्राः भिन्नाः भवन्तीति सर्वे जानन्त्येव। परन्तु पाठ्यपुस्थकस्थानाम् एककानां शीघ्रसमाप्तिरेव कार्यमिति मत्वा शिक्षकाः तदर्थं प्रयत्नं कुर्वन्ति चेत् छात्राणां बुद्धौ विषयस्य स्पष्टता न जायते । तेन कारणेन पाठ्यविषय: जीवने कुत्र कथं च प्रयोक्तव्यम् इत्यपि ते सम्यक् नावगच्छन्ति । अत्र शैक्षिकप्रक्रिया निष्फला भवति । जीवने अस्य पाठ्यविषयस्य स्थानं कुत्र भवति, कथं तस्य योजना करणीया इत्यादिकं पूर्वोक्तप्रकारेण छात्रेभ्यः बोधयितुं यः समर्थः भवति सः अध्यापकः क्रमशः गुरुपदं प्राप्यते । अत्र श्रद्धेयमस्ति यत् सामान्याध्यापकः परीक्षां लिखित्वा प्रमाणपत्रलाभाय छात्रान् प्रेरयति । परन्तु गुरुः तेन कार्येण सह ततोऽधिकं स्वशिष्याय जीवनपरीक्षणेष्वपि समर्थतया समुन्नतं विजयं प्राप्तुं सर्वदा प्रेरणाम्, अवश्यज्ञानं च ददाति।

अतः वैशिष्ट्यं गुरोः एव भवति। शिक्षाशास्त्रमधीत्य उत्तमशिक्षकाः भवेयुः सर्वे, तेन सह समाजप्रगत्यै अवश्यं यत्नो करणीयः। स्वाध्यायः, समाजसम्बद्धता, सांस्कृतिकमूल्यानां पालनं, कालानुसारं जायमानं सामान्यज्ञानं, स्वानुभवज्ञानं च सर्वदा सम्पादनीयमेव । अध्यापको भूत्वा सहास्राधिकच्छात्रेभ्यः ज्ञानप्रदानं लघुकार्यं नास्ति कदापि । परन्तु छत्राणां संख्याबाहुल्यमेव श्रेष्ठमिति न चिन्तयेत् । सहस्राणां वा लक्षाणां कृते केवलाध्यापको भूत्वा कार्यकरणात् एकस्य वा गुरुर्भवितुं शक्यते चेत् तदैव जीवनसाफल्यमिति मे अभिप्रायः । अतः शिक्षाशास्त्रमधीत्य यः शिक्षको भूत्वा समाजं प्रति गच्छति सः स्वप्रयत्नेन तपसा च गुरुर्भवेत् इति भावना । तादृशी भावना आयाति चेत् न केवलं पुस्तकानि न केवलं नराः अपि तु आकाशः,पवनः, सरित्समुद्रादयः, कुसुमानि, कण्टकाः, ऋतवः,जन्तवः,द्वन्द्वगुणा.... इत्यादयः सर्वेऽपि क्षणशः कणशश्च ज्ञानप्रदायकाः भवन्ति। अत्र यदुक्तं तत्सर्वं न शक्यते,वृथा एव इत्यादि चिन्तनं सज्जनानां बुद्धौ न भवति , यतो हि एवमस्ति खलु इतिहासकाव्ये महाभारते यत् -

**यस्य कृत्यं न विघ्नन्ति शीतमुष्णं भयं रतिः।**
**समृद्धिरसमृद्धिर्वा स वै पण्डित उच्यते** ॥ ५:३३:२०॥ इति ॥



# संस्कृतस्य औन्नत्यै प्रयतामहे

**नवनीतकृष्णः जे.**,
SS -II, Roll No. – 28

संस्कृतस्य कारणीभूतेषु अग्रगण्याः अस्मत्संस्कृतिष्वपि मामकीनभावनारहिताः त्यागिनः, पाश्चात्यसंस्कृतिष्वेव सर्वदा अनुरक्ताः भोगिनः, मत्भाषां केवलं श्लाघयन्तः अन्याभिः भाषाभिः एव भाषमाणाः विद्वांसः वयं भारतीयाः एव भवामः । यदि अस्मत्पुरातनीयाः सर्वेपि अस्माकं संस्कृतेः भाषायाः च भविष्यस्य विषये अचिन्तयिष्यन् इदानीं संस्कृतस्य परिस्थितिः एवं न अभविष्यत् । तदानीं मातृभूमेः मातृभाषायाः च उपरि प्रेमस्य अपेक्षया धनकनककन्यादिषु व्यामोहस्य एव आधिक्यम् आसीत् । अतः अस्माकं भाषायाः संस्कृतेः च प्रसारस्य अपेक्षया अस्मासु अन्यभाषाणां संस्कृतीनां प्रसारः एव अभवत् । एतेभ्यः कारणेभ्यः संस्कृतभाषायाः वक्तॄणां सङ्ख्या न्यूना जाता । अस्यां भाषायां नूतनकृतीनां संरचना मन्दतां प्राप्ता । नूतनाविष्काराणां विचाराणां प्रसारः अन्यासु भाषासु एव आरब्धः, इदानीमपि प्रचाल्यमानः अस्ति । सम्यगवलोक्यते चेत् ज्ञायते यत् संस्कृतभाषायाः पतनाय कारणीभूतेषु मुख्यः अंशः भवति नूतनानाम् विचारधाराणां प्रसारे संस्कृतं त्यक्त्वा अन्यभाषाणाम् उपयोगः । एवं रीत्या यदा जनाः तेषां हृदयात् भाषां दूरीकृतवन्तः तदा तेषां मुखादपि सा दूरङ्गता। अत एव इदानीं बहवः न जानन्ति यत् “ संस्कृतं एका भाषा, तया सर्वैरपि सम्भाषितुं शक्यते, पुरा सम्भाष्यन्ते स्म “ इति ।

अतः अस्माकं संस्कृताध्येतॄणां प्रथमं कर्तव्यं यत् सा भाषा पुनःप्रतिष्ठापयितव्या जनमनस्सु-मुखेषु च । परं संस्कृतप्रचारकस्य मार्गे अभिप्रेरकाणाम् अपेक्षया पन्थाह्वानिनां सङ्ख्या एव अधिका वर्तते । **प्रयोजनमनुद्दिश्य न मन्दोपि प्रवर्तते** इति वाक्यवत् सर्वेऽपि धीमन्तः जनाः तया भाषया इदानीं Android युगे किं प्रयोजनम् ? इत्येव पृच्छन्ति । तदा तु अशीतिप्रतिशताः संस्कृताध्येतारः, संस्कृतप्रचारकाः संस्कृतस्य माहत्म्यवर्णनं यथामति कृत्वा विरमन्ति । परं प्रयोजनं वक्तुम् असमर्थाः भवन्ति । अतः संस्कृताध्येतृषु अधोक्ताः त्रयः अंशाः अवश्यं भयेयुः –

1. संस्कृतवाङ्मयस्य सामान्यज्ञानम् ।
2. संस्कृतस्य प्रयोजनानां ज्ञानम् ।
3. संस्कृतक्षेत्रे प्रचाल्यमानकार्याणां ज्ञानस्य नवीकरणम् ।

वयं संस्कृताध्येतारः एतानंशानवाप्य **संस्कृतस्य औन्नत्यै प्रयतामहे** । यतो हि वयं भारतीयाः एव तस्याः भाषायाः अधः पतनाय कारणीभूताः आस्म । अतः इदानीं तस्याः औन्नत्यस्यापि वयमेव कारणीभूताः भवितास्मः । किल ?



रजस् का अर्थ क्रिया तथा इच्छाएं है। राजसिक मनुष्य – स्वयं के लाभ तथा कार्यसिद्धि हेतु जीना। जो गति पदार्थ के निर्जीव और सजीव दोनों ही रूपों में देखने को मिलती वह रजस् के कारण देखने को मिलती है। निर्जीव पदार्थों में गति और गतिविधि, विकास और ह्रास रजस् का परिणाम हैं वहीं जीवित पदार्थों में क्रियात्मकता, गति की निरंतरता और पीड़ा रजस के परिणाम हैं। तमस् का अर्थ अज्ञानता तथा निष्क्रियता है। तामसिक मनुष्य – दूसरों को अथवा समाज को हानि पहुंचाकर स्वयं का स्वार्थ सिद्ध करना | तम प्रधान व्यक्ति, आलसी, लोभी, सांसारिक इच्छाओं से आसक्त रहता है। तामस गुण के प्रधान होने पर व्यक्ति को सत्य-असत्य का कुछ पता नहीं चलता, यानि वो अज्ञान के अंधकार (तम) में रहता है। यानि कौन सी बात उसके लिए अच्छी है वा कौन सी बुरी ये यथार्थ पता नहीं चलता और इस स्वभाव के व्यक्ति को ये जानने की जिज्ञासा भी नहीं होती।



## आधुनिकशिक्षायां मौलाना अबुल कलां महोदयस्य योगदानम्

**अन्जु वि.,**

SS -II, Roll No. -13

स्वतन्त्रभारतस्य प्रथमः शिक्षामन्त्री तथा स्वातन्त्र्यसमरसेनानी च आसीत् मौलाना अबुल कालाम् आज़ाद् महोदयः। स्वतन्त्रतायाः प्राप्त्यनन्तरं स्वतन्त्रभारतस्य राष्ट्रनीतेः पुनर्निर्माणे अस्य महोदयस्य योगदानं प्रमुखं हि वर्तते। नवम्बरमासस्य ११ दिनाङ्के १८८८ तमे वर्षे मक्कायाम् अबुल् कलां महोदयस्य जन्म अभवत्। २००८ तम वर्षादारभ्य राष्ट्रियमानवसंसाधनसमितेः निर्देशानुसारम् सम्पूर्णभारते मौलाना अबुलकालाम् आज़ाद् महोदयस्य जन्मतिथौ (नवम्बर ११)" राष्ट्रिय शिक्षा दिवसः" आचर्यते। अस्य कारणं किम् इति पश्यामः चेत् ज्ञातुं शक्नुमः यत् मौलाना अबुलकलाम् आजाद् महोदयः स्वतन्त्रभारतस्य प्रथमशिक्षामन्त्री आसीत्। ततोपरि राष्ट्रविकासमुद्दिश्य तेषां सम्पूर्णं योगदानं शिक्षायाः उपरि दत्तं च। शिक्षासंविधानानां संरचनायाम् अबुलकलां महोदयस्य योगदानं अतिप्रधानमासीत्। तदनु शिक्षासंरचनप्रक्रियायां कुञ्चिकासदृशः च आसन् एते महोदयाः।

**शैक्षिकक्षेत्रेषु अबुल कलां महोदयः -**

1) अबुलकलां महोदयस्य अधिकारकाले शिक्षामन्त्रालयद्वारा पाश्चात्यविषयाणाम् अध्ययने संशोधने च समुन्नतिः कल्पितम् ,तथा ललितकलानां वृद्ध्यर्थं त्रयः विचाराः च स्थापिताः।

2) हिन्दिभाषायां विस्तृतरूपेण साङ्केतिकशब्दानां सङ्ग्रहाणार्थं विशेषरूपेण अवधानं च कल्पितम् काश्चन समितयः तथा आयोगाः च अबुल कलां महोदयेन समायोजिताः आसन्। ते च यथा -

१.विश्वविद्यालयानुदानायोगः

(University Grants Commission)

२.अखिलभारतप्रविधिशिक्षापरिषद्

All India Council for Technical Education)

३.खरख्पूर् उच्चशिक्षासंस्था

(Kharagpur Institute of Higher Education)

4. विश्वविद्यालयशिक्षायोगः

(The University Education Commission)

५.माध्यमिक शिक्षा आयोगः

(The Secondary Education Commission)

जामिय मिल्लिय इस्लामिय तथा भारतीयप्रौद्योगिकी संस्था खरख्पूरम् इत्यादि शैक्षिकसंसाधनानां स्थापनायाम् अपि अबुल कलां महोदयस्य अंशदानं महत् आसीत् । स्त्रीशिक्षा ,चतुर्दश आयुः पर्यन्तं निर्बन्धितप्राथमिकशिक्षा इत्यादि विषयेषु च एते महोदयाः अतीव श्रद्धालुः तथा गाढाधिवक्ता च असन् । एवं रूपेण पश्यामः चे त् शैक्षिकक्षेत्रे अबुलकलां महोदयस्य योगदानम् अतिश्रेष्टम् अतिप्रधानं हि वर्तते ।



## Life of Indian Farmer - Importance in society

**Pujyabandita Chakra**,

SS -II, Roll No – 36

At the beginning of the nation or it can be said that at the beginning of the civilization the farmer is the most and prestigious person who has come up with lots of the facility for survival in the world. Today in the cities or the village or it is any type of country's corners we will get something to eat. We can eat the meat mostly five to six days but after that, we must want the foods that are the same up of the crops and that have better figment. The farmer grows the crops by using agriculture. By this effort of agriculture, they use to feed the entire humanity and by this, they make our life satisfactorily which means whatever and which crops we want to eat we can.

**The daily life of Farmers -**

The farmers of India are the hardest worker farmer from all over the world. They are being always busy farming for the crops by working night and day. They use to work under the heat of the sunlight and also in the rain. They don't have the fear of any season but they have only the fear that their crops will grow good and fantastic.

Indian farmer celebrates all the social and cultural events in a very simple manner. They do not have much money that they can afford the things that are used in the festivals of the socials and the culture. Besides these, he uses to celebrate many festivals throughout the years like others. He arranges the wedding of his daughter and the son and he celebrates that. He also uses to entertain his family and the neighbors by using his many efforts and doing lots of activity.

**Conclusion**

In India there are many of the farmers are living that are living the simple life. They do not have such the facility that they can complete their needs. They enjoy the company with nature. Day to day comes the news that the farmers of India are getting suicide.

This is the main and most important matter that should be stopped. Why they are getting suicide? The peoples of India must think about it. They can not afford the meals of the full day that is because they are not getting the proper price of their hard-working.

All the farmers are indeed a very truthful and hard worker. We should respect their work because whatever we eat that is because of them. They depend on the god. The Indian government is introducing many of the schemes that are beneficial for the farmers.



## वर्तमानयुगे नारीणां स्थितिः

**विमल शतपथि,**
SS – II, Roll No. – 52

नृशब्दात् स्त्रीत्वविवक्षायां नारीशब्दो निष्पद्यते, यस्य नारयति पालयति पुत्रादीनिति नारी शब्दस्य व्युत्पत्यर्थः स्वीक्रियते। एकेन चक्रेण विना यथा रथस्य गतिर्न भवति तथैव संसारे स्त्रिया विना अयं पुरुषः न संसरितुं शक्नोति। इयम् अवला सततं प्रकृतिवद् पुरुषम् अग्रे सारयति येन शोभन: संसार: संभवति शास्त्रादिषु च नारीणां गरिमा सविस्तृतो वर्तते। नारीणां यत्र पूजा तत्र देवानां वासो भवति। समाजस्य देशस्य च कल्याणं समुपतिष्ठते। तदुक्तं -

**"यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवता:।**
**यत्रैतास्तु न पूज्यन्ते सर्वास्तत्राफला: क्रिया:" ।।**

यथा गृहस्य मूलभित्तिः सुसंङ्घठिता चेत् गृहं कदापि न नश्यति तथैव बालस्य प्राथमिकः गुरु: स्वस्य माता। सा शिक्षिता धीरा भवति चेत् नैव शिशुः कदापि मूर्खायते। तदर्थं स्त्रीणां कृते शिक्षादानं सदा अपेक्षते।

मातृभूमिः, मातृभाषा च इति व्यवहारेण यस्य देशस्य मातरः सुशिक्षिताः पारङ्गताश्च सोऽयं देशः नूनं समुन्नतः स्यात्। मातरः यदि सुशिक्षिताः स्युः तर्हि ताभ्य एव सुशिक्षां प्राप्य शिशवः सदाचारे विज्ञाने वा मनीषिणः भवेयुः। वैदिककाले यथा सावित्री-गार्गी-लोपामुद्रादिमहिलानां कृते शास्त्राध्ययनादिकं प्रचलितम् आसीत्, तथैव साम्प्रतमपि भारतीयानां स्त्रीणां कृतेऽपि सर्वदा अध्ययनव्यवस्था सर्वकारेण विधातव्या । सैव नारी गृहादि-अधिरङ्गमञ्चे मात्रीयति पित्रीयति गुर्वयति च नितराम्। सेयं पतिगृहे स्त्रीत्वेन आस्वादयति पत्यादीन्, किञ्च मातृत्वेन पालयति पुत्रादीन्।

स्त्रियः लोकतन्त्रत्वात् संगीतादिक्षेत्रे मनोनिवेशाय भयं स्थापयन्ति । परन्तु इमा: संगीतकलां संप्राप्य मधुरवातावरणं स्थापयितुमर्हन्ति । अतः तासां कृते एतादृशक्षेत्रेषु अवकाशः प्रदेयः । सति सम्भवे पुरुषस्य मद्यपाने समाजोऽयं तिष्ठेत् , परन्तु नारीणां मद्यपाने तु संस्कृतिलोपेन साकं भूमिरियमपवित्रा स्यात्। शिशवश्च शिक्षिताः स्युः। तदर्थं तासां कृते समाजे नितरां सर्वकारस्य दृष्टिरपेक्षते। पुनरपि तासां नारीणां कृते सर्वैः भारतीयैः विजयगानार्थम् एकसूत्रता स्थापनीया महिलानामुपरि कथञ्चिदपि लौकिकोऽसदाचारः यथा न स्यात् तदर्थं प्रयतेत नितराम्।

अनुदिनमिदानीं दुष्प्रवृत्तेः प्रभावेण जौतुकप्रथा अपहरण- बलात्कारादिसमस्याः जायन्ते । एतासां निराकरणाय सामाजिकान्दोलनं सर्वथा अपेक्ष्यते।



## ज्योतिषशास्त्रे पुत्रप्राप्तियोगः

**Devasree Parida,**
SS -II, Roll No. – 07

यस्य मनुष्यस्य पुत्रः न भवेत्तस्य मुक्तिर्नभवतीति, सन्तानधर्मावलम्बिनां विश्वासः । रुदि - यौगिक योगरुदीति त्रिविधेषु शब्देषु पुत्रशब्दः योगरुदिति रुपेण स्वीक्रियते चेत् 'पु' 'त्र' इति वर्णद्वयं दृष्टिपथे समायाति।

तत्र पुं नाम नरकात् त्रायते इति पुत्रशब्दरय व्युप्तत्तिः लभ्योऽर्थः। अपि च अपुत्रस्य लोके गतिरेव न भवतीति आस्तिकानां विश्वासः। तद्यथा **"नापुत्रस्य लोकोऽस्ति"**। **एवञ्च "अपुत्रस्य गतिर्नास्ति स्वर्गं नैव च नैव च "**। एतदर्थं ज्योतिषशास्त्राचार्यैः पुत्रप्राप्तियोगा: जातकग्रन्थेषु यथास्थानं सन्निवेषिता:। तत् सर्वमपि अन्विष्य अत्र तामुपस्थाप्यन्ते । पुत्रस्य विचार: पञ्चमभावात्, पञ्चमेशात्, पुत्रकारकगुरोः, नवमभावात्, नवमेशाच्च क्रियते | यदि एते सर्वे निर्भया:, पापयुक्ताः, पापदृष्टा: वा भवेयुस्तदा पुत्रप्रतिर्नभवति। यदि लग्नात् चन्द्राच्च पञ्चमेशस्तथा बृहस्पति: सुस्थाने अवस्थितौ, पञ्चमभावं पञ्चमेशस्य शुभग्रहाणां च दृष्टि: भवेत् षष्ठासृमद्वादशभावाधिपतीनां दृष्टिः पञ्चमभावोपरि न भवेत्तथा लग्नेशपञ्चमेशौ एकत्रावस्थितै परम्पर मित्रदृष्ट्यावलोकितौ वा पुत्रसिद्धिर्भवति। तद्यथा-

(1) **" सुंस्था विलग्नशशिनो: सुतभेशजीवा:**
**सुस्थाननाथ शुभदृष्टियुते सुतर्क्षे**
**लगात्मपौ यदि चुनौती च भिथ: सुदृष्टौ**
**क्षेत्रे परस्परगतौ यदि पुत्रसिद्धि: ।**

(2) यस्य पुरुषस्य जन्मकुण्डल्यां पञ्चमेशेन शुभग्रहेण च युक्तः दृष्ट: पञ्चमभावः भवत्तस्य पुरुषस्य पुत्रप्राप्तिर्भवति। तद्यथा -

**नन्दनाधिपतिना युतेक्षितं नन्दनं शुभनभोग संयुतम्**
**नन्दनगमनमेव सत्वरं व्यत्ययेन नहि नन्दनागम:।।**

(3) सप्तमेशस्य नवाशाधिपति: यदि लग्नेश - धनेश तथा नवमेशेन वा दृष्टो भवेत्तर्हि पुत्रप्राप्तिर्भवति। तद्यथा –

**सप्तमेशांशे लग्नार्थधर्मेशौ दृष्टे पुत्राप्ति:।**

(4) पञ्चमेश: - पञ्चमभाव:, पञ्चमभावकारकै: वा यदि शुभग्रहै: युक्तः द्रष्टव्यं भवेत्तर्हि पुत्रप्राप्तिर्भवति तद्यथा–

**" सुतेशे शुभयुतदृष्टे वा सुतये जीवे वा पुत्राप्ति:।**

5) यदि लग्नेश: पञ्चमभावगतः भवेत्तथा पञ्चमेशजीवौ पूर्णवलीनौ भवेतान्तर्हि पुत्रप्राप्तिर्भवति | तद्यथा –

**लग्नेशे पुत्रे पुत्रशेज्यौ विना पुत्राप्ति: ।**

6) पूर्णबली पञ्चमेशो गुरु: यदि लग्नेशेन दृष्टो भवेत्तर्हि पुत्रप्राप्तिर्भवति। तद्यथा –

**पुत्रशेज्येबलिनि लग्नेशदृष्टे पुत्राप्ति:।**

(7) बली, धनेशः पञ्चमभावगतः गुरुणा दुष्टाश्च यदि भवेत्तर्हि पुत्रप्राप्तिर्भवति। तद्यथा -

**वित्तशो सुते बलाद्ये गुरुद्वष्टे पुत्राप्ति ।**

8) यदि पञ्चमेशं लग्नेशस्तथा लग्नेशं पञ्चमेशः पश्यति तर्हि पुत्रप्राप्तिर्भवति। तद्यथा -

**पुत्रेङ्गपौ परस्परं पश्यत: पुत्राप्ति:।**

(9) पञ्चमेशस्य राशौ लग्नेशः तथा लग्नेशस्य राशौ यदि पञ्चमेशो भवेदथवा द्वौ एकत्रावस्थितौ भवेतन्तार्हि पुत्राप्तिभवति। तद्यथा-

**पुत्राङ्गपादन्योभगौ वा युतो पुत्राप्ति: ।**

(10) लग्नेश पञ्चमेशौ शुभग्रहै: युक्तौ केन्द्रगतौ भवेतान्तथा धनेश: वले भवेतर्हि पुत्रप्राप्तिर्भवति / तद्यथा –

**सुताङ्गेशौ केन्द्रगौ शुभान्वितौ धनवलिनि पुत्राप्ति:।**

(11) पञ्चमेशस्य, नवशांधिपतिः यदि शुभग्रहेण युक्त:! दृष्टस्य भवेत्तर्हि पुत्रप्राप्तिर्भवति। तद्यथा –

**पुत्रशांशेशे शुभच्युतदृष्टे पुत्राप्ति:।**

(12) नवमेश लग्नेशौ सप्तमभागवतौ तथा व्यनेश:यदि लग्नगतो भवेत्तर्हि पुत्रप्राप्तिर्भवति। तद्यथा –

**धर्माङ्गेशौ सप्तमे धनेशेङ्गे पुत्राप्ति: ।**

(13) यदि पञ्चमेशः मृदंशादि शुभागतो भवेत्तर्हि पुत्रप्राप्तिर्भवति। तद्यथा -

**सुतेशे मृद्वंशादिगे पुत्राप्तिः।**

14) यदि पञ्चमेशः गोपुरादि अंशबातो भवेत्तर्हि पुत्रप्राप्तिर्भवति ।तद्यथा –

**गोपुरादौ सुतेसे पुत्राप्तिः ।**

15) पञ्चमेशस्य नवांशाधिपतिः लग्नस्थः तथा लग्नेशस्य नवांशाधिपतिर्यदि पञ्चमभावस्थो भवेत्तर्हि पुत्रप्राप्तिभवति। तद्यथा -

**पुत्रांशेशेङ्गे लग्ने शारांशे सुते पुत्राप्तिः ।**

(16) गुरोः नवांशाधिपतिः यदि केन्द्रगतो भवेत्तर्हि पुत्रप्राप्तियोग भवति। तद्यथा –

**जीवांशेशे केन्द्र पुत्राप्तिः।**

17) नवमपञ्चमभावौ पञ्चमेश्च शुभग्रहै: दृष्टा: पारावताद्यांशगता:, यदि भवेयुस्तर्हि पुत्राप्तियोगः भवति! तद्यथा -

**धर्माद्यसुतेशा: परावतादिगा: शुभदृष्टा: पुत्राप्तिः ।**

18) लग्नात् चन्द्रात वा पञ्चगभावः शुभग्रहस्य राशौ शुभ ग्रहेण युक्तः दुष्टश्च यदि भवेत्तर्हि पुत्रप्रतिभवति । तद्यथा-

**लग्नाद्वाचन्द्रात् पञ्चमे शुभर्क्षे शुभसम्बन्धे पुत्रसम्भवोनान्यथा ।**

19) पञ्चमभावः पञ्चमेशः अथवा गुरुः शुभग्रहै: युक्त: दुष्टोवा यदि भवेत्तर्हि पुत्रप्राप्तिर्भवति। तद्यथा -

**पुत्रस्थाने तदीशे वा गुरौ वा शुभवीक्षिते,**

**शुभग्रहणे संयुक्त पुत्रप्राप्तिर्न संशय: ।**

20) लग्नेश: पञ्चमस्य भवेत्तथा पञ्चमेशः अथवा गुरु: यदि बली भवेत्तर्हि पुत्रप्राप्तिर्भवति। तद्यथा –

**"लग्नेशे पुत्रभावस्ये बलसंयुते परिपुर्णबले जीवे पुत्रप्राप्तिर्नसंशय:** ।

21) पञ्चमस्य सबलो बृहस्पतिः यदि लग्नेशन दृष्टो भवेत्तर्हि पुत्रप्राप्तिर्भवति। तद्यथा –

**पुत्रस्यानगते जीवे परिपूर्ण बलन्विते ।**

**लग्नाधिपेन संद्रष्टे पुत्रप्राप्तिर्नसंशय: ।।**

22) यदि पञ्चमेशः अथवा गुरुः वैशेषिकांशगत भवेत्तथा पञ्चमस्थानोपरि नवमेशरय दृष्टिः भवेत्तर्हि पुत्रप्रातिर्भवति। तद्यथा -

**वैशेषिकां शके जीवे पुत्रेशे च तथा स्थिते ।**

**शुभनायेन सन्द्रष्टे पुत्रे तत्प्राप्तिमादिशेत् ॥**

23) यदि पञ्चमभावे गुरुणा युक्तः अथवा दृष्टः मङ्गल: मेष सिंह बृश्चिक अथवा मीन राशिस्यो भवेत्तर्हि पुत्राप्तिर्भवति। तद्यथा -

**पुत्रस्थानगते भोगे मेषसिंहालिनीनो**

**जीवदृष्टियुते काऽपि पुरावाप्तिं विनिर्दिशेत्**

24) षष्ठाष्टमव्दादशभावान्  विहाय अन्येषु स्थानेषु, यदि शुभ ग्रहैः दुष्टः पञ्चमशोः बली भवेत्तर्हि पुत्राप्तिर्भवति। तद्यथा-

**सुतेशे रिष्करन्धारि भावादन्यत्र संस्थिते**

**बल्युक्ते शुभैदृष्टे सुतावाप्तिं विनिर्दिशेत्**

25) शुभग्रहेः  युक्तः  दुष्टः शुभग्रह मध्यगतः पञ्चमेशः यदि बली भवेत्तर्हि पुत्रप्राप्तिः भवति। तद्यथा -

**सुतेशे बलसंयुक्ते शुभमध्यगतेऽथवा**

**शुभदृष्टि युते वा अपि सुतवाप्तिं  विनिर्देशेत्!!**

26) स्वराशिस्थाः अथवा स्वोच्चस्थाः शुक्रगुरुबुधाः यदि लग्न - पञ्चम - नवम - दशमेकादशभावेषु अवस्थिताः भवेयुर्त्तहि जातकस्य पुत्र राजारामो भवति। तद्यथा -

**"उदयनन्दनलाभनिकेनतनास्पदतयः प्रमदालयगाः यदि**

**कविसुरेज्यबुधाः निजमोच्चगाः  नृपसमस्तनुजोबहुवित्तपाः ॥**

27) जन्मकुण्डल्यां बलिनौ, पञ्चमेशलग्नेशौ द्रेष्काणगतौ पञ्चमभावस्थौ यदि भवेत्तर्हि पुत्रप्राप्तिर्भवति। तद्यथा-

**सुतङ्गपौ सुतेस्यातामेक द्रेष्काणगौ यदि**

**बली पेता विभौ यस्य सत्वरं नन्दनगमः ॥**

28) लग्नपञ्चमभावौ शुभग्रहैः युक्तौ भवतामथवा बली बृहस्पतिः पञ्चमे दशमे - एकादशे वा अवस्थितो भवेत्तर्हि पुत्रोप्राप्तिः भवति। तद्यथा -

**लग्ने शुभग्रहे पुत्रे शुभाक्रान्ते सुतो भवेत्।**

**पञ्चमे दशमे लाभ गुरौ वा बलसंयुक्ते**

29)  स्वोच्चस्थः पञ्चमेशः लाग्नात, द्वितीये, तृतीये नवमे पञ्चमे वा अवस्थितः , गुरुणा युक्तः दुष्टो वा भवेत्तर्हि जातकः पुत्रसौख्यवान् भवति। तद्यथा -

**पुत्रस्थानाधिपे खोच्चे लग्नाच्चेदित्रिकोपभे**

**गुरुणा संयुते दृष्टे पुत्रभाग्यमुपैतिसः !!**

30) खोच्चकेन्द्रस्था: सर्वेग्रह्य यदि पञ्चमभावं पश्यन्ति तर्हि नरपालसमः पुत्रो  भवति!   तद्यथा -

**तुङ्गकेन्द्र स्थित सर्वेरीक्षिते  यदि पञ्चमे।**

**नरपालसमः पुत्रो जायते नात्र संशयः**

**एवमेव  रुपेण पुत्रप्राप्तियोगाः विचार्यन्ते ॥**

**सन्दर्भग्रन्थसूची –**

(1) फलदीपिका - पुत्रभावफलाध्याय: श्लोक. 1।

(2) भाबकुतूहलम् -षष्ठोध्याय: श्लोक संख्या -1।

(3-4) जातकतत्वम्- पञ्चमविवेक:- सू. सं. 165,166।

(5-7) जातकतत्वम्- पञ्चमविवेक:- सू. सं. 167,168 ।

(7-9) जातकतत्वम्- पञ्चमविवेक:- सू. सं. 170,171,172 ।

(10-14) जातकतत्वम्- पञ्चमविवेक:- सू. सं.

(15-18) जातकतत्वम्- पञ्चमविवेक:- सू. सं. 178-187 ।

(19-22) जातकपारिजात- त्रयोदशऽध्याय: - सू. सं. 16-19 ।

(25-26) प्रश्नमार्ग - अष्टादशोऽध्याय: - 18-23 ।

(27-28) भावप्रकाश: पञ्चमभावफलम्- 22,23,24 ।

(29) बृ .पा .हो. शा.- पृ . सं. 92.- श्लोक. 16 ।

(30) भावप्रकाश: पञ्चमभावफलम् - श्लोक. 22



## गणकयन्त्रमाध्यमं संस्कृतम्

**सुश्री सुभनीता प्रधान,**

SS -I, ROLL NO. – 26

पूर्वं भावना आसीत् यत् संस्कृतं पूरोहितानां वेदपण्डितानां च भाषा इति। किन्तु इदानीं संस्कृतविषये एषा भावना उत्पन्ना अस्ति यत् संस्कृतं गणकयन्त्रोपयोगिनी भाषा इति।एषु दिनेषु जवाहरलालनेहरु विश्वविद्यालयेन प्रयोगद्वारा प्रमाणीकृतम् अस्ति यत् गणकयन्त्रद्वारा अनुवादकार्यं यत् सम्पाद्यते तत्र संस्कृतं माध्यमत्वेन बहुधा उपकरोति इति।एतस्य परिणामत: संस्कृतस्य उपयोग: श्रेष्ठता,सत्त्वं च प्रमाणपुरसरं पुनः दृढ़ीकृतम् अस्ति।आंग्लभाषानिबद्धस्य विषयस्य अनुवादं गणकयन्त्रद्वारा कर्तु यथा शक्यते तथा ज.ने विश्वविद्यालयेन किञ्चन तन्त्रज्ञानम् अन्विष्टम् अस्ति।एतस्मिन् प्रक्रमे माध्यमरूपेण संस्कृतस्य उपयोग: कृत: अस्ति। लालबहादुरशाश्त्री संस्कृतविश्वविद्यालयस्य सहयोगेन एतत् कार्यं साधितम्।एतदर्थं १९८४तमवर्षात्

आरभ्य ज.ने विश्वविद्यालयेन कार्यं क्रियमाणम् आसीत्। एतस्य प्रकल्पस्य प्रमुख: जि.वि सिङ्गमहोदय: एतद्विषये वदति यत् एष: प्रक्रम: अनुवादकार्ये यथा उपयोक्तुं शक्य:,तथैव संस्कृताध्यायेन,कक्ष्यायां संस्कृतपाठने, भाषारचना-विश्लेषणे चापि उपयोक्तुं शक्य:।एष:सिङ्गमहोदय: ज.ने विश्वविद्यालयस्य गणकयन्त्रविज्ञानविभागस्य प्रध्यापक: अस्ति।एष: प्रक्रम:CASTEL नामिकाया: संस्थाया: सहयोगेन सज्जीकृत: अस्ति।सिङ्गमहोदयस्य आशय:एतदपि अस्ति यत् कर्यालयेषु प्रादेशिकभाषापत्रिकालयेषु वा यदि एतस्य उपयोग:क्रियते तर्हि अनुवादकार्यस्य वेग: दशगुणितं वर्धेत,अनुवादकतृणाम् आवश्यकता अपि न भवेत्।प्रथमं तावत् यन्त्रम् आंग्लभाषास्थं विषयं संस्कृतेन अनुवदति।ततश्च अपेक्षितया प्रादेशिकभाषया तम् एव विषयम् अनूद्य ददाति।एवम् अनुवादकार्ये माध्यमरुपेण संस्कृतस्य उपयोग: कृत:,यत: संस्कृतं भारतीयभाषाणां माता मातृतुल्या वा अस्ति। अन्यञ्च यथा आंग्लभाषायां विषय: "वाक्यरचनया:" आधारेण तिष्ठति तथा भारतीयभाषासु नास्ति।भारतीयभाषासु विषय: प्रायः "पदानाम्" आधारेण तिष्ठति इति।CASTEL संस्थायाः पाणिनीयं व्याकरणम् अधिकृत्य विशेषसंशोधनं कृतम् अस्ति।एतेषां सर्वेषां सम्मिश्रणेन विद्युत् विश्वकोष: रुपित:।एतस्य सहाय्येन वाक्यविश्लेषणकार्यं वायरचनाकार्यं च सुकरं जातम्।प्रादेशिकभाषापत्रिकालये कथम् अस्य उपयोग:भवितुम् अर्हति?एतद्विषये सिङ्गवर्य: वदति – यदि एतस्य प्रक्रमस्य वार्तासङ्ग्राहकयन्त्रस्य च सम्बध: कल्प्यते तर्हि आंग्लभाषास्था: वार्ता: यथा यथा प्राप्यन्ते तथा तथा अपेक्षितभाषया अनुवाद: अपि तत्समकाले एव प्राप्यते इति। साम्प्रतम् एतस्य परिक्षा उपयोग: च लालबहादुरशास्त्रि-विश्वविद्यालये कक्षायां कृत:। परिणामत: तु नितराम् आशादायक: अस्ति।य: विद्यार्थी संस्कृताभ्यासं कर्तुम् इच्छति स: आचार्यस्य साहाय्यं विना अपि,एतस्य प्रक्रमस्य आधारेण भाषाभ्यासं कर्तुं शक्नोति। किन्तु एतस्य प्रक्रमस्य उपयोगविषये छात्रेण विशेषज्ञानं प्राप्तव्यं भवति। अन्यथा एतस्य पूर्ण: उपयोग: छात्रेण प्राप्तुं न शक्यते इति सिङ्गमहोदय: वदति, एतस्य उपयोगिता बिषये। छात्रस्य अध्ययनार्थम् अपेक्षितानाम् अभ्यासानां रचनार्थं च प्रक्रमे आन्तरिकी काचित् पद्धति: अपि योजिता अस्ति। यत् उत्तरम् उक्तं सम्यक् वा न वा इति परीक्षणार्थम् अपि व्यवस्था कृता अस्ति अत्र। अन्ते सिङ्गमहोदय: सविनयं वदति "एतावत् साधितं चेदपि एतत् आरम्भमात्रम् ।परिष्कार: अभिवृद्धि: च अत्र नितराम् अपेक्षते" इति ।

**सन्दर्भ ग्रन्थ:-**

1)सम्भाषणसन्देशः – संस्कृतभारती

2) रसना - मासिकी

3) अन्तर्जालम्



# कक्षावातावरणनिर्माणे शैक्षिकप्रविधिशास्त्रम्

चिन्मय पण्डा,
SS -I, Roll No. -23

शिक्षणं नाम काचित् गतिशीलाप्रक्रिया। प्रक्रियायाम् अस्यां छात्रः, शिक्षकः, पाठ्यवस्तु चेति त्रीणि तत्त्वानि प्रमुखानि भवन्ति । एतेषां तत्त्वानां सम्बन्धस्थापनेन शिक्षणप्रक्रिया सुष्ठु प्रचलति, छात्रेषु समुचिताधिगमश्च जायते । पाठ्यवस्तुमाध्यमेन छात्रशिक्षकयोर्मध्ये सम्बन्धस्थापनं भवति । उभयोर्मध्ये सम्बन्धस्थापनाय या क्रिया प्रचलति सा अन्तःक्रिया कक्षासम्प्रेषणं वेति नाम्ना ज्ञायते। कक्षासम्प्रेषणस्य कृते कक्षावातावरणस्य निर्माणमपरिहार्यम् । कक्षाशिक्षणेऽपि कक्षावातावरणस्य आवश्यकता वर्तते। कक्षावातावरणनिर्माणं शिक्षकस्य कार्यं सर्वादौमहत्वपूर्णं भवति । एतस्मिन् कार्ये प्रविधिशास्त्रस्य भूमिका वरीवर्ती।

**शैक्षिकप्रविधेः परिभाषा -**

**राबर्ट. ए. कॉकस -** महोदयेन उक्तम" मानवस्याधिगमपरिस्थितिषुवैज्ञानिकप्रक्रियायाः प्रयोगः शैक्षिकप्रविधिरित्युच्यते " इति।

**कक्षावातावरणनिर्माणं - शैक्षिकप्रविधिशास्त्रम् -**

शैक्षिकप्रविधिः शिक्षणं सरलं रुचिकरं प्रभावपूर्णं च करोति, शिक्षणस्योद्देश्यप्राप्त्यर्थं शिक्षकं सर्वदा प्रेरयति च । शिक्षणप्रक्रियायां व्यवस्थापकरूपेण शिक्षकः बहूनि कार्याणि सम्पादयति । शिक्षकस्य कार्येषु चत्वारि कार्याणि प्रमुखानि भवन्ति। नियोजनं - व्यवस्था - अभ्यासः - मूल्याङ्कनञ्चेति। एतानि चत्वारि शैक्षिकप्रविधिशास्त्रस्य मूलभूतानितत्त्वानि भवन्ति । एतेषां तत्त्वानां सम्यक् ज्ञानं प्राप्य शिक्षकः समुचितकक्षावातावरणस्य निर्माणं कर्तुं प्रभवति।

(1) नियोजनेन शिक्षणस्य नियोजने उद्देश्यानां निर्धारणं क्रियते । शिक्षणात् पूर्वं शिक्षकः अधिगमस्योद्देश्यं प्रतिपादयति। कार्यस्य विश्लेषणं कृत्वा तस्य विभाजनमपि करोति । क्रमबद्धरूपेण तत्त्वानि व्यवस्थितानि करोति । उद्देश्यानां पारिभाषीकरणं कृत्वा तेषां व्यवहारिकरूपेण लेखनञ्च करोति । उद्देश्यमाधारीकृत्य पाठ्यक्रमस्य निर्माणंभवति, शिक्षणविधेः निर्धारणमपि जायते। शिक्षणोद्देश्यद्वारा शैक्षिकोद्देश्यस्य प्राप्तिर्भवति। शिक्षणोद्देश्यानि त्रिविधानिभवन्ति -१) ज्ञानात्मकोद्देश्यानि, २) भावात्मकोदेश्यानि, ३) क्रियात्मकोद्देश्यानि च।

१) छात्राणां ज्ञानप्राप्तिः यथा अधिका भवेत् तदर्थ ज्ञानात्मकोद्देश्यानामुपरि अधिकबलंदीयते। ज्ञानात्मकोद्देश्यद्वारा निम्नप्रकारस्य ज्ञानस्य बोधः भवति। १) विशिष्टतथ्यानां ज्ञानम्, २) विधीनां प्रविधीनाञ्च ज्ञानम्, ३) सिद्धान्तानां सामान्यीकरणस्य च ज्ञानम्।

२) भावात्मकोद्देश्यानां सम्बन्धः छात्राणां रुचिः, संवेगमनोवृत्तयः, मूल्यं इत्यादिभिः सह भवति । भावात्मकपक्षस्य विकासकः अतीवकठिनकार्यं भवति यतो हि रुचयः, संवेगाः, मनोवृतयः, स्थायीभावः व्यक्तिविशेषस्य दशाः भवन्ति। भावात्मकपक्षस्य उन्नतये एतानि भावात्मकोद्देश्यानि अत्यावश्यकानि भवन्ति। तानि १) ग्रहणम् २) अनुक्रिया, ३) मूल्यानि ४) विचारविमर्श: ५) व्यवस्था ६) मूल्यसमूहस्य चारित्रोपकरणम् च।

३) क्रियात्मकोद्देश्यस्य सम्बन्धः शारीरिकक्रियाणां प्रशिक्षणस्य च विकासेन सह भवति । क्रियात्मकपक्षे १) प्रत्यक्षीकरणम्, २) व्यवस्थापनम् ३) निर्देशात्मिका अनुक्रिया, ४) कार्यप्रणाली, ५) जटिलप्रत्यक्षानुक्रियादितत्त्वानि सम्मिलितानि भवन्ति।

**(2) व्यवस्था–**

शिक्षकःसम्यग्रूपेण उद्देश्यनिर्धारणं कृत्वा उद्देश्यानां व्यावहारिकदृष्ट्या लेखनं कृत्वा शिक्षणस्य समुचितव्यवस्थां करोति । प्रभाविशिक्षणार्थं विविधसहायकसाधनानि शिक्षणप्रक्रियायां प्रयुज्यन्ते । एतानि साधनानि शिक्षणसहायकोपकरणानि इत्युच्यन्ते। एतानि ज्ञानेन्द्रियं प्रभावितं कुर्वन्ति। जे. जे. वेवरमहोदयेनोक्तम् यत्- कस्यापि वस्तुनः ज्ञानं ४०% दृश्यानुभवेन, २५% श्रव्यानुभवेन, १५% स्पर्शानुभवेन, १७% अन्यानुभवेन, ३% स्वानुभवेन च प्राप्तुंशक्यते। शिक्षणसहायकोपकरणानि त्रिविधानि भवन्ति।

**१. श्रव्यसहायकोपकरणानि** यथा - क) आकाशवाणी ख) ध्वनिपञ्जिका ग) वर्तुलपञ्जिका घ) भाषापञ्जिका च । एतान्युपकरणानि कक्षाशिक्षणे पाठसम्बद्धं पाठाभ्यासं पाठस्यावृत्तिं च कर्तुं शिक्षकाय सौविध्यं कल्पयन्ति।

**२. दृश्यसहायकोपकरणानि** क) प्रकृतवस्तूनि ख) श्यामपट्टः ग) प्रतिमानानि घ) चित्राणि ङ) रेखाचित्राणि च ) मानचित्राणि छ) चित्रप्रकाशकः च भवन्ति। एतेषामुपकरणानां प्रत्यक्षीकरणेन प्रकृतवस्तुनः ज्ञानं प्राप्यते।

**३. श्रव्यदृश्यसहायकोपकरणानि** १) चलचित्रम् २) दूरदर्शनम् ३) नाटकम् ४) वार्ताचित्रम् ५) सङ्गणकम् ६) ध्वनिचित्रपञ्जिका इत्यादीनि भवन्ति । एतानि दृश्यश्रव्येन्द्रियाणि साधनानि कक्षावातावरणनिर्माणे उत्तेजितं कृत्वा शिक्षकं सहायतां जनयन्ति।

**(3) अभिप्रेरणम् :-** पाठ्यस्य विकासकरणाय अभिप्रेरणम् एण्डरसन् महोदयेन निगदितंयत् "शिक्षणं यदिप्रेरितं भवति तर्हि सम्यग्रूपेण अग्रे प्रचलिष्यतीति" शिक्षणप्रक्रियायाम् अभिप्रेरणस्य महत्त्वं स्वीकृत्य छात्राः शिक्षकस्य प्रेरणया अधिगमं प्राप्तुं प्रेरिताःभवन्ति। तेषु रुचिः उत्पद्यते। पाठे तेषामवधानं च जायते।

**(4) मूल्याङ्कनम् :-** मूल्याङ्कनं शिक्षणप्रक्रियायाः अभिन्नमङ्गमिति स्वीक्रियते । मूल्याङ्कनेन सम्पूर्णशिक्षणप्रक्रियायाः नियन्त्रणं कर्तुं शक्यते। मूल्याङ्कनेन एतद् ज्ञायते यत् उद्देश्यानां प्राप्तिः जाता न वा, छात्राणां व्यवहारेषु परिवर्तनं जातं न वा ,यदि परिवर्तनं जातं तर्हि कियत्जातमिति । अत एव मूल्याङ्कनं

काचित्व्यापकप्रक्रिया भवति या निरन्तरं प्रचलति। मूल्याङ्कने मापनस्य परीक्षणस्य च समावेशः जायते। मूल्याङ्कनेन छात्राणां दोषाणां निदानं कृत्वा उपचारात्मकानुदेशस्य व्यवस्था क्रियते।

**निष्कर्षः** –

शैक्षिकप्रविधिशास्त्रं शिक्षणप्रक्रियां प्रभावपूर्णां कर्तुं शिक्षकं प्रेरयति। शिक्षणस्य नियोजने शिक्षकः कार्यस्य विश्लेषणं कुर्यात्। प्रविधीनां माध्यमेन समुचितविधीनां प्रविधीनाञ्च चयनं भवति। दृश्यश्रव्योपकरणानाम् उपयोगोऽपि क्रियते।अभिप्रेरणस्य प्रविधीनाम् उपयुक्तचयनं कृत्वा छात्रेषु रुचिमुत्पादयितुं विषयं प्रति तेषां ध्यानाकर्षणं च कर्तुं शक्यते। प्रविधिद्वारा कक्षाव्यवहारस्य अध्ययनं, विश्लेषणं च कर्तुं शक्यते। प्रविधिः अधिगमप्रणाल्याःमूल्याङ्कनम्, छात्रव्यवहारस्य मूल्याङ्कनं च कर्तु शिक्षकं सहकरोति। अन्ते एवं वक्तुं शक्यते यत् कक्षाशिक्षणे, कक्षावातावरणनिर्माणे शिक्षकेण एतानि कार्याणि अवश्यमेव आचरितव्यानि येन शिक्षणं सरलं, रुचिकरं बोधगम्यञ्च स्यात्। एतेषां तत्त्वानामाधारेण शैक्षिकप्रविधिशास्त्रं सम्पूर्णशिक्षणप्रक्रियां प्रभावयतीतित्यत्र नास्ति सन्देहस्यावसरः।

**सन्दर्भग्रन्थाः** –

१. शर्मा. अ.र. ए. : "शिक्षा तकनीकी"।

२. पात्र. बी. "कक्षासम्प्रेषणम्"।

३. भूषण, एस. तथा वार्ष्णेय, ए. के.: "शैक्षिकतकनीकी"।

४. पात्र. बी. शिक्षणस्य वैज्ञानिकाधारः"



## पर्यावरणशिक्षायाः शैक्षिकक्षेत्रे प्रयोजनम्

**मानसी महापत्रा**,

SS - I, Roll No. – 42

पर्यावरणम् इति शब्दः "परि" "आवरणम्" इति शब्दयोः योगेन निष्पनं जायते। परितः आवरणं नाम पर्यावरणम् अर्थात् अस्मान् परितः यानि तत्त्वानि विराजन्ते तानि सर्वाणि पर्यावरणम् इत्यभिधीयन्ते यथा वायुः, जलम् भूमिः, वृक्षः, मनुष्यः पशुः, पक्षिणः इत्यादयः। एतेषां तत्त्वानां समाहारः एव पर्यावरणम्। पर्यावरणम् आङ्ग्लभाषायां (Environment) भवति। अस्माकं चतुपार्श्वे परिवेष्टिता भौतिकरासायनिकजैविकावस्था हि पर्यावरणम्। अस्माकं परितः जलवायु-मृद-उद्भिद जीवधारी अणुजीवानां च समाहारः एव पर्यावरणम्। समस्तजैविकाजैविकोपादानराशीनां समष्टिगतरूपेण कस्यापि स्थानविशेषस्य स्थित्यावस्थायाः नियन्त्रणपूर्वकम्, उद्भिदं प्राणिनं प्रति च प्रभावीकरणप्रक्रियारूपेण अपि परिचितं भवति पर्यावरणम्। जीवनधारिणामभिवृद्धिः, जीवनधारणप्रक्रिया, वंशवृद्धिः, इत्यादयः प्रत्यक्षाप्रत्यक्षभावेन पर्यावरणेन एव नियन्त्रिताः भवन्ति। पर्यावरणं स्थाणुः न भवति।

**शिक्षाक्षेत्रे पर्यावरणशिक्षायाः एतानि प्रयोजनानि विद्यन्ते -**

(१) पर्यावणं प्रति चित्ताकर्षणं, समुचितरुच्याभिवृत्तीनां विकास च विद्यालयमाध्यमेन एव भवितुम् अर्हति। अतः शिक्षाक्षेत्रे अस्याः शिक्षायाः समावेशः भवेत्।

(२) पर्यावरणसन्तुलनार्थं जनसंख्यावृद्धेःनियन्त्रणमावश्यकं भवति । तत्पर्यावरणशिक्षणामाध्यमेन एव भवितुम् अर्हति।

(३) पर्यावरणसंरक्षणं प्रति सकारात्मकाभिवृत्तिमुत्पादनार्थं वैज्ञानिकदृष्टिकोणस्य विकासार्थञ्च पर्यावरणशिक्षायाः आवश्यकता भवति।

(४) सम्प्रति जगति औद्योगिकक्रान्तिरागता, वैज्ञानिकसंसाधनानां बाहुल्यं जातम् । परमनेन प्रकृतौ किञ्चन प्रदूषणं जातम्। अतः प्रदूषणनिवारणाय,पर्यावरणीयसमस्यायाः समाधानमन्वेष्टुमावश्यकी शिक्षा|

(५) नगरीकरणेन औद्योगीकरणेन च प्रायः मानवानां जीवनमूल्यानां ह्रासः सञ्जातः । अपि च प्रकृतेः विनाशः भवति । पर्यावरणे असन्तुलनमागतम् । एतदर्थं शिक्षकशिक्षणार्थीनां कृते पर्यावरणीयसंरक्षणस्य शिक्षा आवश्यकी।

(६) धरायाःवर्धमानस्योकेतोऽस्य, जल-वायु- ध्वनि-मृदादिप्रदूषणस्य याः समस्याः वर्तमाने बलवत्यः जाताः तासां ज्ञानं सर्वेषां कृते आवश्यकं भवति। अपि च ज्ञानमिदं पर्यावरणशिक्षामाध्यमेन एव भवितुमर्हति।

(७) अद्यतनच्छात्राः एव भाविभारतस्य कर्णधाराः भवन्ति । एतदर्थं सुखमयजीवनयापनार्थं पर्यावरणशिक्षाज्ञानम् आवश्यकम्।

इत्थं रूपेण पर्यावरणशिक्षा न केवलं छात्राणां कृते अपितु अद्यतनीयानां सर्वेषां कृतेऽपि अत्यावश्यकं वर्त्तते। अतः अस्याः शिक्षायाः प्रयोजनीयता न केवलं शिक्षायां दृश्यते अपितु सर्वेषु क्षेत्रेषु अपि दृश्यते। अतः सर्वेषु क्षेत्रेषु निरवच्छिन्नरूपेण अस्याः शिक्षायाः प्रचालनम् अवश्यम् एव भवति।



# शिक्षायाः प्रक्रिया

**आतिरा पि. के.,**

SS -I, Roll No. – 05

अस्मिन् प्रपञ्चे शिक्षां प्राप्तुमवसरः सर्वेभ्यो न भवति। शिक्षा केवलं पठनेन एव न अनुभवेनापि प्राप्तुं शक्यते । शिक्षा नाम आजीवनं प्रचाल्यमाना काचित् गतिशीला प्रक्रिया, यया मनुष्यस्य जन्मजातशक्तीनां स्वाभाविकः सामञ्जस्यपूर्णो विकासो भवति । शिक्षायाः चतस्रः प्रक्रियाः सन्ति एकमुखी, द्विमुखी, त्रिमुखी बहुमुखी चेति।

पुरातनभारते गुरुकुलशिक्षा आसीत्। गुरुमुखात् एव शिक्षा प्राप्यते स्म। तत्र केवलम् अध्यापकस्येव अधिकप्राधान्यम् अभवत्। एतत्प्रक्रिया भवति एकमुखी प्रक्रिया। द्वितीया भवति द्विमुखी प्रक्रिया। अत्र व्यक्तिः

अपरव्यक्तये ज्ञानं प्रदाय तस्य प्रकृतिं विकासयति संवर्धयति परिवर्तयति च। शिक्षकच्छात्रयोः समानप्राधान्यं वर्तते अस्यां प्रक्रियायाम्। अध्यापकेन पाठितविषये छात्रेभ्यः पश्नकरणस्य अवसरः अपि प्राप्यते। तेन कक्षायां सक्रियता भवति । त्रिमुखी प्रक्रियायाम् आचार्यान्तेवासिभिः सह सामाजिकी प्रक्रिया अपि योजिता । सामाजिकशक्तयःसामाजिकवातावरणमाध्येमेन शिक्षकः छात्रं विषयसामग्रीं वितरति प्रददाति वा । आधुनिकशिक्षाशास्त्रिणः शिक्षायाः बहमुखीप्रक्रियां स्वीकुर्वन्ति। साम्प्रतं प्रत्येकं ज्ञानक्षेत्रे निरन्तरविकासत्वात् सर्वत्र दृष्टिं प्रसारयितुं न शक्यते। तदनुगुणम् अल्पेनैव श्रमेण अल्पीयसी काले बहून् विषयान् ज्ञातुं सम्प्रयन्ते। इयं मानवान् केवलं ज्ञानप्राप्तिक्षेत्रे एवं न अपितु शिक्षणस्य सम्पूर्णप्रक्रियायम् अधिगमोत्पादनं कर्तुं प्रयतते। एतत् सर्वं मनसि निधाय आधुनिकाः वदन्ति यत् - न केवलं शिक्षणप्रक्रियायां छात्रः अध्यापकः पाठ्यक्रमः अपितु तदतिरिच्य अन्यदपि सहायकतत्त्वम् अस्तीति। आधुनिककाले बहुमुखी प्रक्रिया सर्वत्र वर्तते। यदि उपकरणानां प्रयोगः कक्षायां भवति चेत् छात्रा उत्साहिनः भवन्ति । बहुमुखीप्रक्रियायाः लक्ष्यं भवति रुचिपूर्णपाठनम् । छात्राणां कृते प्रत्यक्षरूपेण अनुभवः जायते। एवं प्रत्यक्षरूपेण कक्षा भवति चेत् छात्राः जामिताः न भवन्ति। तथा मनः बहिः अपि न याति। विषये जिज्ञासावर्धनं भवति। विषयावगमने स्पष्टतया अवगम्यते। तार्किकबुद्धेः विचारः वर्धते। छात्राणां मनसि नूतनभावनाः आगच्छन्ति। वैविध्यमयपाठनेन एव छात्रान् आकर्षयन्ति। अतः कक्षायां सर्वदा बहुमुखी प्रक्रियायाः प्रयोगः अधिकतया करणीयः । एवं बह्वीः पद्धतीः अनुश्रुत्य शिक्षणे साफल्यमानयेत्।



## आनलाइन माध्यम से शिक्षा व्यवस्था

**शिवम त्रिपाठी** ,

SS -I, Roll No. – 01

*** विकल्प नहीं सहायक है ऑनलाइन शिक्षा।**

ऑनलाइन शिक्षा की दो पक्षों को समझना आवश्यक है। प्रथम दृष्ट्या ऑनलाइन शिक्षा के प्रचलन में आने से वर्तमान में शिक्षा के क्षेत्र में ई-लर्निंग प्लेटफॉर्म, लर्निंग ऐप, सॉफ्टवेयर इंजीनियर आदि की मांग में इजाफा हुआ है। यानी ऑनलाइन शिक्षा महामारी के इस दौर में रोजगार उपलब्ध कराने में उपयोगी साबित हो रही है। इसके माध्यम से कामकाजी व्यक्ति भी अपनी दक्षता बढ़ा सकता है। अत: ऑनलाइन शिक्षा को पूर्ण रूप से खारिज नही किया जा सकता। दूसरी ओर ऑनलाइन शिक्षा विद्यार्थियों के चरित्र निर्माण में बाधक सिद्ध हो रही है। इसके माध्यम से विद्यार्थी ज्ञान तो प्राप्त कर रहा है, परन्तु उसकी भावनात्मक बुद्धि तथा तर्क वितर्क क्षमता विकसित नहीं हो पा रही है। इसलिए आवश्यक तो यह है कि कक्षीय पाठन को त्वरित गति से शुरू करने की व्यवस्था सरकार को करनी चाहिए। यदि महामारी के दौर में ऑनलाइन शिक्षा को सहायक मानते हुए इसे सभी विद्यार्थियों तक पहुंचाना है, तो सरकार को इसके उचित प्रबंध करने की आवश्यकता है। ऑनलाइन शिक्षा को पारंपरिक शिक्षा पद्धति का विकल्प ना मानते हुए सहायक ही समझा जाना चाहिए।

*** वर्तमान में उपयोगी।**

वर्तमान परिस्थितियों में शिक्षण कार्य सुचारु रूप से चलाने के लिए ऑनलाइन शिक्षा बेहतर विकल्प है, किन्तु कोरोनाकाल के बाद सामान्य परिस्थितियों में इसे जारी नहीं रखा जाना चाहिए। यह बच्चों के सर्वांगीण विकास में बाधा बन सकता है।

हर घर पहुंची शिक्षा वर्तमान में ऑनलाइन शिक्षा सभी के लिए बहुत ही उपयोगी है । ऑनलाइन शिक्षा ने आज हर घर तक शिक्षा को पहुंचा दिया है। इसका सबसे बड़ा फा उन पढने वाले लोगों को हुआ है जिन्हों ने किसी कारणसे बीच में हीअपनी पढ़ाई छोड़ दी थी। आज वे फिर से ऑनलाइन शिक्षा के माध्यम से अपनी पढ़ाई और अपने सपने को पूरा कर रहे हैं।

दूरस्थ शिक्षा की संस्थाएं भी तेजी से इस विकल्पको अपनाने की ओर बढ़ रही हैं. ऐसे में हम आने वाले दशक में भारत में ऑनलाइन शिक्षा के क्षेत्र में अभूतपूर्व वृद्धि देख सकते हैं।

*** ऑनलाइनशिक्षाकेलाभ**

1- नियमित रूप से आवागमन की बाधा समाप्त हो जाने से बहुत सा समय और खर्च की बचत भी हो जाती हैं.

2 – विद्यालय के संसाधनों एवं संभारतन्त्र की बचत भी हो जाती हैं.

3- पढाई से पूर्व की औपचारिकता में व्यय होने वाले समय को बचाया जा सकता हैं.

4- डिजिटल डेटा को आसानी से सेव किया जा सकता हैं जिस कारण पूर्व में दिए गये लेक्चर को किसी भी समय पुनः उपयोग किया जा सकता हैं।

**संदर्भ सूची-**

1-Chrome M.patrika.com 2. Chrome - Live Hindustan.com,
3.क्वचित् विषयं स्वेच्छानुसारम्॥



## शिक्षाक्षेत्रे पाठ्यसहगामिक्रियाः

**आर्या बि.,**
SS - I, Roll No. – 22

प्राचीनकाले शिक्षणं नाम ग्रन्थस्थविषयाणां कण्ठस्थीकरणं तत्प्रतिपादनमित्यासीत् । किञ्चित्का - लानन्तरं वादविवादः, नाटकं, सङ्गीतञ्च इति नैके विचाराः शिक्षणेन सह सम्मिलिताः। तद्दर्शयति नीतिशतके विद्यमानः श्लोकः-

**साहित्यसङ्गीतकलाविहीनःसाक्षात्पशुः पुच्छविषाणहीनः।**
**तृणं न खादन्नपि जीवमानःतद्भागधेयं परमं पशूनाम्॥**

साम्प्रतं पाठ्यसहगामिक्रियाः विद्यालये छात्राणां मानसिक - शारीरिक - बौद्धिकविकासाय प्रधानं स्थानम् प्रयच्छन्ति | पाठ्यक्रमपूरकाः क्रियाः, पाठ्यसहगामिक्रियाः च सर्वेषु विद्यालयेषु सञ्चालनीयाः वर्तन्ते | एताभिरेव क्रियाभिः सर्वाङ्गीणविकासः संसाध्यते | ताः क्रियाः व्यवस्थितरूपेण सञ्चालनीयाः ।

**पाठ्यसहगामिक्रियाणामुद्देशयानि -**

1. छात्राणां चारित्रिकभावनायाः संरक्षणं विकासनञ्च |
2. छात्रेभ्यः स्वशासनस्य (self governance) प्रजातन्त्रस्य च प्रक्रियाणाममूल्यानुभवप्रदानं येनोत्तमनागरिकस्य निर्माणं जायते ।
3. विभिन्नेभ्यः वातावरणेभ्यः समागतेषु छात्रेषु परस्परं सहयोगस्य भावनायाः विकाससम्पादनम् ।
4. छात्रेषु भावात्मकरूपेण ऐक्यं सम्पाद्य राष्ट्रयैकतायाः मार्गे समायोजनम् |
5. समाजविद्यालययोर्मध्ये सम्बन्धदृढीकरणम् |
6. सामाजिकेषु विद्यालयीयकार्यक्रमाणामुपरि रुच्युत्पादनम् ।
7. छात्राणां सर्वाङ्गीणविकाससम्पादनं, रिक्तसमयस्य सदुपयोगः ।

**अस्माकं संस्कृतेः परिप्रदानम् |**

विद्यालयस्य क्रियाकलापाः छात्राणां भाविजीवनस्य कृते शक्तिदायकाः भवन्ति । अतः एतासां पाठ्यसहगामिक्रियाणां महत्त्वं छात्राणां जीवने वर्तते । तेषां व्यक्तित्वविकासे पाठ्यसहगामिक्रियाणां महद्योगदानं वर्तते । पाठ्यक्रमेण केवलं वैषयिकविकासः जायते । परमेतेषां क्रियाविशेषाणां द्वारा शारीरिक-मानसिक-सामाजिकविकासः सन्तुलितरूपेण जायते । पाठ्यसहगामिक्रियाः छात्रेभ्यः स्वसामर्थ्यस्य आत्मविश्वासस्य च विकाससम्पादनार्थम् अवसरं प्रकल्पयन्ति । एताभिरेव क्रियाभिः छात्रा अनुशासनत्वं नेतृत्वगुणञ्च अवगच्छन्ति।

अतः पाठ्यसहगामिक्रियाणां महत्त्वं विद्यालयसंघटनक्रियायां विविधकोणेषु वर्तते । माध्यमिकविद्यालयेषु विविधप्रकारकक्रियाः संघटनीयाः भवन्ति । यतो हि वास्तविकरूपेण छात्राणांविकासस्य महत्वपूर्णः कालः भवति । तेषां रुचेः अपि संरक्षणं तादृशरूपेण कल्पना क्रियते चेत् पाठ्यसहगामिक्रियासु विविधप्रकाराः वर्तन्ते | ताः यथा – समुदायक्रियाः, धार्मिकक्रियाः, शारीरिकक्रियाः, साहित्यकक्रियाः , सांस्कृतिकक्रियाः |

**निष्कर्षः -**

शैक्षिकक्षेत्रे पाठ्यसहगामिक्रियाणां महत्त्वपूर्णस्थानं भवति | कक्षायां विद्यमानच्छात्राणां मानसिकविकासाय बुद्धिविकासाय इयं कार्यं करोति । पाठ्यसहगामिक्रियाणां विकासस्य स्तरत्रयं प्रत्यपादयत् । प्रथमः स्तरः भवति यत् शिक्षकैः प्रशासकैश्च पाठ्येतरक्रियाणामवलोकनं क्रियते स्म | द्वितीयः स्तरः भवति

यदेतासां क्रियाणां विरोधः क्रियते स्म । तृतीयः स्तरः आधुनिकयुगस्य वर्तते यस्मिन् शैक्षिकोद्देश्यानां प्राप्तौ पाठ्यसहगामिक्रियाणां प्राप्तौ पाठ्यसहगामिक्रियाणाम् उपयोगोऽ नितरसाधारणो ऽ - त्यावश्यकश्चेति परिगण्यते |

**सन्दर्भग्रन्थाः** -

1) डा. चन्द्रकान्तः - शैक्षिकप्रशासनं नियोजलञ्च

2) मित्तलः सन्तोषः, सिंहः फतेहः – विद्यानयप्रशआसनं सङ्घटनञ्च ।



## शिक्षाक्षेत्रे पर्यावरणशिक्षायाः आवश्यकता

**रेवती पि. एन्.,**

SS -I, Roll no. – 27

आधुनिकयुगे मानवाः अत्यधिकपारिस्थितिकसमस्याः अनुभवन्ति । तेन मानवेषु अधिकतया स्वास्थ्यसम्बद्धरोगाः आगच्छन्ति । सर्वे जीविनः भूमौ परस्परपूरकत्वेन तिष्ठन्ति । मानवाः प्रकृतिविभवस्य अधिकतया उपयोगं कुर्वन्ति । स्वीयसुखजीवनाय मानवाः भाविनिकालस्य विस्मरणं कृत्वा जीवन्ति । अस्मात् कारणात् अधिकतया परिस्थितिदोषाः उत्पाद्यन्ते । परिस्थितेः प्रदूषणस्य मुख्यकारणं तु मानवस्य अश्रद्धा एव भवति । सुखमयजीवनार्थ धावन्तः मानवाः तं परितः विद्यमानपरिस्थितेः विषयं न चिन्तयन्ति । परिस्थितेः संरक्षणाय मानवेषु मानसिकपरिपक्वतावबोधः स्यात् । तत् तु पारितन्त्रीयविषयसंबन्धपठनेन साध्यते । विविधसस्यजन्तूनां विशिष्टवर्गः कः? इतिज्ञानाय का नाम सुस्थिरता, तां कथं प्राप्तुं शक्यते? प्रपञ्चस्य मुख्यघटकाः के? आधुनिके लोके पारिस्थितिकसमस्याः काः ? तासां संतुलनं संरक्षणं च कथं करणीयम् इति ज्ञातुं शिक्षाक्षेत्रे पर्यावरणशिक्षा आवश्यकी भवति। अनया शिक्षया प्रदूषितपर्यावरणे वाञ्छिपरिवर्तनम् आनेतुं शक्यते ।

परिस्थितेः अपचयेन शारीरिकमानसिकस्वास्थ्यस्य विनाशः सम्भवति । छात्रेषु विद्यमानाश्रद्धा, विषादः, स्थूलत्वमित्येषां निवारणाय पर्यावरणशिक्षा साहाय्यं करोति । शिक्षाक्षेत्रे पर्यावरणशिक्षायाः आनयनेन छात्रेषु परिस्थितिं प्रति आदारपुरस्सरमनोभावः जायते । अनया शिक्षया छात्रेषु वैज्ञानिकमस्तिष्कं समुत्पद्यते । पठितृषु छात्रेषु प्रकृतेः प्राधान्यं बोधयतुं तस्यां विद्यमानानां नानावस्तूनां पुनः उपयोगं कर्तुं तेषां संरक्षणं, नूतनपद्धतेः आविष्कारं कर्तुं च साहाय्यं करोति । एषा शिक्षा भाविनि नागरिकेषु पर्यावरणं प्रति सकारात्मकक्रियायाः विकासाय, पर्यावरणसमस्यानां तासां निराकरणोपायानां परिचयाय, प्राकृतिकसंसाधनानां समुचितप्रकारणोपयोगाय च पर्यावरणशिक्षा अत्यन्तावश्यकी भवति ।

पर्यावरणशिक्षा मानवं प्रकृतेः सौन्दर्यं प्रबोधयति । मानवजीवनं रोगरहितं कष्टरहितं शान्तिपूर्वकं च अग्रे नेतुं मार्गं दर्शयति । एषा शिक्षा जनसङ्ख्यावृद्धेः मुख्यकारणानि निरीक्ष्य तेषां निवारणाय निर्देशनमपि प्रयच्छति ।

इयं शिक्षा भाविसुयोग्यनागरिकाणां निर्माणे अभिप्रेरणां प्रददाति । वैदिककाले पर्यावरणशिक्षा विषयकानि बहूनि उदाहरणानि द्रष्टुं शक्यन्ते

**परोपकाराय फलन्ति वृक्षाः परोपकाराय वहन्ति नद्यः ।**
**परोपकाराय दुहन्ति गावःपरोपकारार्थमिदं शरीरम् ॥**

प्रकृतौ विद्यमानानि फलानि वृक्षाः स्वयं न खादन्ति, अन्येषां कृते एव ददति । नद्यः स्वार्थलाभाय न प्रवहन्ति, अन्येषाम् उपकाराय, अस्यां विद्यमानजलम् अन्ये जन्तवः जीवनं कर्तुम् उपयुञ्जन्ते । गावः परोपकाराय एव दोहनं कुर्वन्ति एवं मानवशरीरम् अपि परोपकाराय उपयोक्तव्यम् इति उच्यते अत्र । पर्यावरणस्य सन्तुलितावस्थायां वृक्षाणां महत् योगदानं भूमिकां च स्वीकृत्य मुनिभिः विस्तृतचिन्तनं कृतं वर्तते । मत्स्यपुराणे अस्य महत्त्वं प्रतिपादितं वर्तते । पुराकाले मानवाः वने वासं कृतवन्तः । प्रकृतिपुरुषौ परस्परपूरकत्वेन अवर्तताम् । अस्योदाहरणं भवति कालिदासस्य श्लोकः–

**पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम् ।**
**आदौ वः कुसुमप्रवृत्तिसमये यस्याभवत्युत्सवःसेयं याति शकुन्तला पतिगृहं सर्वैरनुज्ञायताम् ॥**
**(अभि.- ४.११)**

महर्षिकण्वः वदति यत् शकुन्तला वृक्षाणां सेचनम् अकृत्वा जलपानम् अपि न करोति स्म । सा अतीवालङ्कारप्रिया अस्ति । चेदपि नवपल्लवान् न चिनोति यदा वृक्षेषु नवपर्णानि अङ्कुरन्ति। तथा सा उत्सवमिव मन्यते । सा शकुन्तला अधुना पतिगृहं गच्छति । सर्वे ताम् अनुमन्यताम् इति ।

आधुनिकयुगे पर्यावरणशिक्षायाः इतिहासः एकोनविंशतिः शताब्द्यायाम् आरब्धः । १४९९ ईसवीये पैट्रिकगोडस महोदयेन इंगलण्ड् देशे **'द और लुक टावर'** नाम्नाएका संस्था संस्थापिता । एतस्याः संस्थायाः लक्ष्यमासीत् यत् पर्यावरणे शिक्षायाञ्च परिशोधनम्| बालकेन्द्रितशिक्षायाः प्रबलपक्षधरः जीन जैकसरूसोमहोदयस्य प्रकृतिं प्रति प्रत्यावर्तनम् (back to Nature) इत्युद्घोषः पर्यावरणशिक्षायाः महत्त्वं प्रतिपादयति । १९६५ तमे वर्षे ईसवीये अमेरका देशस्य ककीले- विश्विद्यालये पर्यावरणशिक्षा सर्वप्रथमं पाठ्यक्रमस्य अनिवार्याङ्गत्वेन अङ्गीकृता । पर्यावरणशिक्षा एकः नवीनसंप्रत्ययः वर्तते । आधुनिककाले विद्यालयेषु पर्यावरणशिक्षा साम्प्रतं प्रचलन्ती अस्ति । पर्यावरणशिक्षा छात्रेभ्यः पर्यावरणमाद्यमेन पर्यावरणविषये ज्ञानं प्रयच्छति । पर्यावरणमिति शब्दः द्वयोः शब्दयोः संयोगेन निष्पद्यते । परि तथा आवरणमिति । पर्यावरणस्य तात्पर्यं भवति, परितः आवरणम् । मानवं परितः यत् भौतिक-सामाजिक-सांस्कृतिकप्राकृतिकावरणञ्च वर्तते तदेव पर्यावरणम् इत्युच्यते ।

आङ्ग्लभाषायां पर्यावरणस्य Environment इति शब्दस्य प्रयोगः क्रियते । Environment इति शाब्दिकार्थः वर्तते यत् Environ इत्यस्यार्थः भवति Encircle अर्थात् आवरणम् इति तथा Ment इति शब्दस्यार्थः all around अर्थात् सर्वतः इति ।पर्यावरणमाध्यमेन पर्यावरणविषयमधिकृत्य पर्यावरणस्य कृते प्रदीयमाना या शिक्षा भवति सा शिक्षा पर्यावरणशिक्षा इति उच्यते । पर्यावरणस्योपरि चिन्तनं छात्रेषु पर्यावरणशिक्षया सम्भवति । पर्यावरणस्वच्छतायै प्रयत्नं कर्तुं छात्राः मिलित्वा ग्रामे ग्रामे, नगरे नगरे, प्रत्येकं गणशः विभज्य तेषां क्रियात्मकप्रवर्तनद्वारा अन्ये, अन्यायन् जनानपि प्रेरयन्ति । उत्तमनागरिकाणां निर्माणं

विद्यालयेषु एव शक्यते । अतः विद्यालयेषु पर्यावरणशिक्षा आवश्यकी वर्तते । अनया शिक्षया न पर्यावरणस्य, अपि तु अस्माकं जीवनम् अपि सुकरं भवति ।

**संसूचनासन्दर्भाः -**


1) मित्तलः सन्तोषः, एवं अग्रवाल मीना , पर्यावरण एवं पर्यवरणशिक्षा , ऐर.एल.के बुक डिपो – मेरठ ।

2) पाणिग्राही निर्मला ,पर्यावरणशिक्षा , ओजस्वीप्रकाशन् ,पुरी ।




# शिक्षायाः प्रकाराः


**आरति बि. एस्.,**

SS -I, Roll No. -20


शिक्षा नाम - बालकानाम् अन्तर्निहितशक्तीनां बहिरानयनं या करोति सा शिक्षा । यदा शिशुः जायते तदा सः पशुतुल्यः एव भवति । किन्तु पश्चात् शिक्षया तस्य द्वितीयं जन्म इव भवति । तदा सः अधिकतरं शोभते । येषां शिक्षा न भवति ते वस्त्राभूषणालङ्कृता अपि सभामध्ये मूर्खताकारणात् न शोभन्ते । ये पुनः शिक्षावन्तो भवन्ति ते सर्वत्र शोभन्ते, पूज्यन्ते, सम्मान्यन्ते च । इयं च शिक्षा जन्मतः मृत्युपर्यन्तं प्रचल्यमाना काचित् प्रक्रिया भवति । प्रो. उमा-विल महोदयौ वदतः यत् शिक्षया ते सर्वे प्रभावाः अन्तर्भवन्ति ये हि व्यक्तिं जन्मतः आरभ्य मृत्युपर्यन्तं प्रभावयन्ति । अर्थात् शिक्षा तादृशी प्रक्रिया वर्तते यया प्रक्रियया मनुष्यस्य जन्मजातशक्तीनां स्वाभाविकविकासो भवति । शिक्षा त्रिधा भवति औपचारिकी-अनौपचारिकी- निरौपचारिकी इति ।

**उद्देश्यानि -**

1. सुव्यवस्थितव्यक्तित्त्वविकासार्थम् ।
2. नैतिक-सामाजिक-सांस्कृतिक-शारीरिक-मानसिकविकसार्थम् ।
3. छात्राणाम् ऐक्यभावनायाः विकासासम्पादनार्थम् ।
4. पठितविषयस्यावबोधकार्यान्वयश्च ।
5. चरित्रनिर्माणेन सहैव सुनागरिकत्वसम्पादनम् ।
6. साक्षरतावर्धनम् ।
7. राष्ट्रियविकासः ।

औपचारिकशिक्षायाः कार्यं विद्यालये एव विधिपूर्वकं क्रियते । निश्चितपाठ्यक्रममनुसृत्य या शिक्षा प्रचलति सा औपचारिकशिक्षा । सा शिक्षा प्रक्रिया यस्यास्तु पाठ्यक्रमः कालः, सत्रं, स्थानं, शिक्षकः, सर्वोऽपि सुनिश्चितः स्यात् । अत्र औपचारिकशिक्षायाः छात्रस्य उपस्थितिः अनुगुणं शिक्षायाः ग्रहणं भवति । शिक्षायाः सहायेन छात्रः समाजानुगुणं सक्षमः भविष्यति । छात्राध्यापकयोः प्रत्यक्षसम्बन्धः निश्चितरूपेण वर्तते । छात्राणां ज्ञानात्मक- भावात्मक- क्रियात्मकपक्षाणां विकासः एतत् द्वारा जायते । शिक्षा, उद्देश्यं ,पाठ्यचर्या, पाठ्यपुस्तकं, शिक्षणविधिः सहायकसामग्री इत्यादिनाम् औपचारिकशिक्षा निश्चिता भवति । विद्यालयः, धार्मिकसंस्थाः

पुस्तकालयः संग्रहालयः, व्यायामशाला, इत्यादि औपचारिकशिक्षायाः अभिकरणानि भवन्ति । तद्विपरीतमनौपचारिकी शिक्षेति कथ्यते । औपचारिकशिक्षायाः समयसीमा अस्ति परन्तु अनौपचारिकशिक्षायां समयसीमा न भविष्यति । छात्राध्यापकयोः प्रत्यक्षसम्बन्धः निश्चितरूपो न वर्तते । अनौपचारिकशिक्षा बहिस्थव्यक्तिद्वारा प्राप्यते । बहिस्थः व्यक्तिः स्वीयानुभवद्वारा विद्यां प्रददाति । अनिश्चितसमये अनिर्धारितस्थाने च योजनां विना शिक्षायाः आयोजनम् । परिवारः, समाजः, क्रीडाङ्गणम् आकाशवाणी, दूरदर्शनम् इत्यादि अनौपचारिकशिक्षायाः अभिकरणानि भवन्ति । औपचारिक - अनौपचारिकयोः सम्मिश्रणेन या शिक्षा आयोज्यते सा निरौपचारिकी शिक्षा इति उच्यते । छात्राध्यापकयोः सम्बन्धः नास्ति । स्वेच्छेया कार्याणि भवन्ति। पाठ्यसहगामिक्रिया निश्चिता न भवति । सर्वाङ्गीणविकासस्य तथा जीवनोपयोगी विषये बलं ददाति । एतादृशं स्वयं जीवनमेव पठति । अनुभवाधारितशिक्षकस्यनियुक्तिः भवति । पत्राचारपाठ्यक्रमः, जनसंचारमाध्यमानि, चलचित्रगृहम्, मुक्तविश्वविद्यालयसंगणकयन्त्रम् इत्यादि निरौपचारिकशिक्षायाः अभिकरणानि भवन्ति । पुस्तकालयः, संग्रहालयः, व्यायामशाला, इत्यादि औपचारिकशिक्षाया अभिकरणानि भवन्ति ।

**निष्कर्षः -**

शारीरिकमानसिकबौद्धिकवैचारिकचारित्रिकादि विकासः परिवारस्य समाजस्य ग्रामस्य राज्यस्य विश्वसमुदायस्य च कल्याणं कर्तुं समर्थः भवति । मानवः शिक्षया एव उत्तमनागरिकाणां निर्माणाय यतते । प्रत्येकमपि देशः नागरिकनिर्माणशिल्पस्थानरूपेण औपचारिकशिक्षानुपठनानां विद्यालयादीनामपौचारिकाणां शैक्षिकाभिकरणानां च विकासे तत्परः भवति ।

**"विद्वत्वं च नृपत्वं च नैव तुल्यंकदाचन ।**
**स्वदेशे पूज्यते राजा विद्वान् सर्वत्र पूज्यते ॥ (पञ्चतन्त्रम्)**

**संसूचनासन्दर्भाः -**


1. शिक्षादर्शनम् - डा.सोमनाथसाहू,
2. अन्तर्जालञ्च




# जीवने विद्याभ्यासस्य प्राधान्यम्

**श्रीष्णा शिवन्,**

SS - I, Roll No. – 21

**"आचार्यात्पादमादत्ते पादं शिष्यः स्व मेधया।**

**पादं सब्रह्मचारिभ्यः पादं कालक्रमेण च।" (महाभारतम्)**

शिष्यः आचार्यात् पादभागं ज्ञानं प्राप्नोति, स्वीयया बुद्धिशक्त्या अपरं पादभागं सम्पादयति | सहाध्यायिभ्यः अन्यत् पादभागमासादयति। कालक्रमेण अपरपादभागं ज्ञानं प्राप्स्यति। विद्याभ्यासः इति चिन्तने सति अस्माकं मनसि आदौ ज्ञानप्राप्ति इति आयाति । विद्याभ्यासेन कुटुम्बः, समूहः, राष्ट्रम् इत्यादीनाम् आवश्यकतां प्राधान्यं च ज्ञातुं शक्यते । समूहे विद्यमाननानाविधाक्रमाणां निवारणार्थं विद्याभ्यासः साहायं करोति। "विद्याभ्यासः अस्माकं परितः विद्यमानलोकानां ज्ञानं ददाति । विद्याभ्यासः नास्ति चेत् व्यक्तेः नूतनाशयपर्यवेक्षणं कर्तुं न शक्यते। कारणं तु आशयः नास्ति चेत् सर्गात्मकता नास्ति, सर्गात्मकता नास्ति चेत् राज्यस्य विकसनमपि नास्ति।

आधुनिके व्यावसायिकलोके बहुप्रधानांशो भवति विद्याभ्यासः । अतः आधुनिककाले उत्तमविद्याभ्यासः आवश्यकः भवति। अस्माकम् आधुनिकसमाजे जनानां मूलतत्त्वं भवति, उन्नतजीवितस्तरः, ज्ञानञ्च । व्यक्तीनां मुक्तिप्राप्त्यर्थं विद्याभ्यासः साहायं करोति । एकः उत्तमः उद्योगं प्राप्य परिवाराणां सर्वविधावश्यकानां च पूरयितुं शक्नोति । ते सर्वे जीवितम् आरोग्यसौख्यपूर्वकम् आस्वादनं कुर्वन्ति। अतः ते वञ्चिताः अक्रमे च अवस्थानां साध्यता नास्ति । उत्तमः विद्याभ्यासःइत्युक्ते केवलम् उन्नतस्थानप्राप्तिः एव नास्ति । उत्तमविद्याभ्यासःलभ्यते चेत् राज्यस्य वाणिज्यं, व्यापारं च सुष्ठुरूपेण उन्नतिं प्राप्यते । एवं च राज्यसेवनमपि कर्तुं शक्यते। सतिसहगमनं, बाल्यविवाहः. स्त्रीधनम् इत्यादिषु सहगमनं विद्याभ्यासस्य शक्तिम् उपयुज्य, समस्या निवारणं कर्तुं शक्यते । उत्तमविद्याभ्यासाय अन्यजनसम्पर्कः, आशयविनिमयं च अत्यन्तं साहायं करोति । विद्याभ्यासः नास्ति चेनEmail, letter (वैद्युतिकपत्रम्), अन्यपुस्तकानि,दूरवाणीइत्यादीनाम्उपयोगमपिकर्तु न शक्यते। विद्याभ्यासः स्त्रीणां, पुरुषाणां च समानावकाशः/ अवसरःच लभ्यते। लोकस्य परिवर्तनार्थम् उपयुज्यमानोत्तमम् आयुधम् अस्ति विद्याभ्यासः।

**"विद्या ददाति विनयं विनयाद्याति पात्रताम्।**

**पात्रत्वात्धनमाप्नोति धनात्धर्मः ततः सुखम्॥" (नित्यनीतिः)**

विद्या अस्माकं कृते विनयं ददाति, विनयम् अस्माकं कृते योग्यतां ददाति, योग्यता अस्माकं कृते धनम् अथवा सम्पत्त् ददाति, तेन मार्गेण अस्माकं नीतेः प्रवृत्तिः भवति, अतः सन्तोषः सुखं च लभ्यते । उत्तमविद्याभ्यासद्वारा व्यक्तेः मनसि धार्मिकमूल्यानि प्रकाशयितुंशक्यन्ते । एतत् उत्तममनुष्यनिर्माणं भवितुमपि सहायति।

**अनुशीलितग्रन्थाः-**

- नीतिशतकम्, पञ्चतन्त्रम्, अन्तर्जालञ्च



# भारतीयसंविधाने शिक्षा

**स्वाती रमेष,**
SS -I, Roll No. – 07

भारतभूमिरियं बहुकालम् अन्यैः आक्रन्ता परिपीडिता च आसीत्। परतन्त्रकाले भारते शिक्षाविकासो न समुचितरूपेण अजायत। शिक्षा मानवस्य अन्तर्निहितपूर्णतायाः अभिव्यक्तिरेव शिक्षा मानवविकासस्य परमं साधनम्। विस्तृते अस्मिन् संसारे मूलतो द्विविधा जनाः दृश्यन्ते। तेषु केचन पाठिताः अपरे अपाठिताः च। स्वतन्त्रोदयात् परम् अनेकाः समस्याः समुत्पन्नाः,तासु प्रधानास्ति अशिक्षितानां शिक्षाव्यवस्था।

**उद्देश्यानि -**

शिक्षया एवमानवस्य देशस्य, समाजस्य राष्ट्रस्य वापि सर्वतोमुखविकासो भवति। जनेषु सुस्वभावस्य निर्माणं, चारित्रनिर्माणं, गुणानां विकासः उत्तमनागरिकनिर्माणम् इत्यादि गुणाः, शिक्षायाः आर्जननैव जायन्ते। भारतीयसंविधाने अपि राष्ट्रनेतारः शिक्षायाः महत्तरस्थानं कल्पितवन्तः। स्वातन्त्र्यानन्तरं भारते शिक्षासम्बद्धानेकविचाराः भारतीयसंविधानस्य डॉ.अम्बेडकर प्रभृतिभिः नवभारतस्य निर्माणे १९५० वर्षे जनवरी २६ दिने भारतीयसंविधानाय संसूचिताः। भारतीयसंविधाने सर्वेषां जनानां समानता परिकल्पिता। संविधाननियमेषु अनुच्छेदः२१ स्पष्टयति यत् ६१४ वर्यावर्गस्यबालकेभ्यः निश्शुल्कानिवार्यशिक्षायाः घोषणा कृता अनुच्छेदः ४५ तमधारास्पष्टयति संविधानस्य क्रियान्वयात् दशवर्षाभ्यन्तरं सर्वेषां बालकानां निश्शुल्कानिवार्यशिक्षाप्रदानाय राष्ट्रं यत्नशीलं भवति इति।

शिक्षानीतिनिर्धारणमुखाः धाराः बह्व्यः उपनिबद्धाश्च वर्तन्ते। ताः यथा -

१-अनुच्छेदः धारा वा २८ संस्थासु पठन्तः धार्मिकशिक्षायां धार्मिकोपासनायांधार्मिकस्थानेषु च उपस्थातुं बलात् न आनेयाः यावत् ते प्रौढाः न भवन्ति। संरक्षकेण पितृभिः वा तदर्थं नानुमीयते।

२-अनुच्छेद: २९(१) भारतस्य कस्मिन्नपि प्रान्ते क्षेत्रे यत्र कुत्रापि वास्तव्याः जनाः स्वभाषालिपेः संस्कृतेश्च संरक्षणाय अधिकारिणः भविष्यन्ति।

३-अनुच्छेदः- २५(२)- राज्यद्वारा सञ्चालिते साहाय्यभूते वा कस्मिन्नपि विद्यालये कोऽपि जातिधर्मलिङ्गभाषाभेदेन प्रवेशात् वञ्चितः न भविष्यति। (शिक्षायाःदार्शनिकधाराः)

**निष्कर्षः–**

भारतीयसंविधाने सर्वेषां शिक्षाप्रदानाय दायित्वं केन्द्रराज्यसर्वकाराभ्यामुभाभ्यां च प्रदाय तेषु शिक्षामुपरि शिक्षा सम्बन्धविधिनिर्मातुं शक्नोति। विविधेषु अनुच्छेदेषु शिक्षायाः महत्तरं स्थानं कल्पितम्। अनुच्छेदस्य आधारेण शिक्षा क्षेत्रे विभिन्नानि परिवर्तनानि सञ्जातानि। सर्वेषां शिक्षाप्रधानाय शिक्षाविकासार्थं निश्शुल्कानिवार्यशिक्षा स्यात्। प्रधानसर्वजातीयेभ्यःसमानदृष्टया शिक्षाप्रधानाय, धर्मनिरपेक्षशिक्षाप्रदानम् इत्यादि विषयाःभारतीयसंविधाने प्रमुखाः आसन्। शिक्षया एव राष्टस्य उन्नतिः अपिजायते एति सुविदतमेव। पूर्वकालापेक्षया शिक्षायां नवीनशिक्षापद्धत्या अनेकानि परिवर्तनानि संजातम्।

**नूतनपदानि -**

परतन्त्रकालः = depend period, केन्द्रराज्यसर्वकारः = central state government



# विश्ववाङ्गमये संस्कृतम्

**Barada prasad panigrahi,**
SS -I, Roll No. – 28

नकेवलं भारतस्य अपि तु विश्वस्य भाषा हि संस्कृतम् । सर्वासां भाषाणां जननी इयम् गीर्वाणवाणी संस्कृतभाषा | फ्रेञ्च्, जर्मनादयः वैदेशिकभाषाः अनया भाषया समुद्भूताः । संस्कृतं यादृशी भाषा वैज्ञानिकी अस्ति, तादृशी अन्यासु भाषासु न विद्यते । देववाणी सुरभारती इयम् अनेकभावेन ज्ञायते । सर्वास्वपि विश्वभाषासु इयं प्राचीनतमा । समग्रपृथिव्यां भाषा तात्विकदृष्ट्या अभ्यासस्य महत्त्वं सर्वथैव अनस्वीकार्यम् । सर्वजनाभिवन्दिता सकलजनमनोहारिणी । साधूक्तम् -:

**'भाषासुमूख्यासूरभारतीयम्" ।**
**'भाषासु मधुरा मुख्या गीर्वाणभारती " ।**
**'संस्कृतं नाम दैवी वागान्वाख्यता महर्षिभिः" ।**

भाषा श्रेष्ठा । भाषाशव्दस्य कोऽर्थः ? भावप्रकाशकशब्दनिचय: भाषा ।

भाषाणात्भाषा इत्याहुः । भाष्यते भाषणादिव्यवहारोऽनुष्ठीयते यया सा भाषा । रामायणमहाभारतकाले संस्कृतभाषा आसीत् जनसाधारणस्य भाषात्वेन । इल्वलादि राक्षसेश्वरः आरभ्य रामचन्द्रस्य पर्यन्तं सर्वे संस्कृतमाध्यमेन भावप्रकाशनं कृतवन्तः । अस्मात् ज्ञायते संस्कृतमेव राष्ट्रभाषा आसीदिति ।अन्यथा उत्तरभारतीया अबला सीता अशोकवने हनुमता दक्षिणभारतीयेन सह कया भाषाया वार्तालापं कृतवती स्यात् । संस्कृतं तु आसीत् योगसूत्ररक्षाकारिणी भाषा । भारतस्य संघरक्षाकारिणीयं भाषा । दिग्विजयकाले द्राविडादक्षिणभारतीया संस्कृतभाषया अत्यन्तनिपुणा: आसन् । शङ्कराचार्य: यदा युक्त्या दिग्विजयाय भारतवर्षे भ्रमितवान् कया भाषयोसौ दार्शनिकालोचनां कृतवानिति ? संस्कृतभाषया सः तस्य भाष्यं बृहत्रयीम् अधिकृत्य लिखितवान् । सर्वभारतीयस्तरे फलत: तदीयग्रन्थाः पण्डितैः पठ्यन्ते पाठ्यन्ते आलोच्यन्ते च । तेषां शङ्कराचार्याणां समये नार्य: संस्कृतभाषयाकथोपकथनं कर्तुं क्षमाः आसन् । मण्डनमिश्रस्य सुपण्डिता पत्नी संस्कृतभाषया शङ्कराचार्येण सह दार्शनिकालोचना निरता ।अपि च मण्डनमिश्रस्य क्रमे मण्डनमिश्रस्य हास्य विषये शङ्कराचार्यस्य जिज्ञासां श्रुतर्वा काचित् ग्राम्यनारी संस्कृतभाषया उत्तरितवती । यथा -

**"स्वत: प्रमाणं परतः प्रमाणं कीराङ्गनाः यत्र गिरं गिरन्ति ।**
**द्वारस्थ नीडान्तरसंनिरुद्धाः जानि हि त तन्मण्डनमीश्रम् ।।"**

परन्तु आधुनिकयुगे यदा प्रश्नम् आगच्छति का भाषा राष्ट्रभाषा भवितुम् अर्हति । यदा प्रतिष्ठितैः राजनीतिनिपुणजनैः संस्कृतभाषाया: नाम विस्मृतं याति । राष्ट्रभाषाप्रसङ्गे दाक्षिणात्ये विरोध: अभवत् । तथापि संस्कृतस्य नाम न श्रूयते । एतत्तुभारतस्य दौर्भाग्यम् । शासकवर्गैः संस्कृतं प्रति आनुगत्यं भवतु वा न भारतवर्षे संस्कृतवृक्षस्य मूलं सदैव सुदृढम् अस्ति येन अस्य उत्पाटनं सर्वथा असम्भव एव ।

**यावत् भारतवर्षं स्यात् यावत् विन्ध्यहिमाचलौ ।**
**यावत् गङ्गा च गोदा च यावता तदेव हि संस्कृतम् ।**

समग्रभारतवर्षे आहिमाचले संस्कृतस्यमहत्त्वं सर्वथानस्वीकार्यम् । वेदपुराणादि धर्मग्रन्थाः न केवलं भारतवर्षे आद्रियन्ते परं समग्रपृथिव्यां सर्वेषु संस्कृतग्रन्थानां समादारः वर्तते । कस्य सचेतसः विदितं नास्तियत् संस्कृतं सुसाहित्यस्य भवनं, आस्पदं साधुतायाः, आकरो ज्ञानस्य च । यथा –

**"अस्माकं सकलं जगद्धितकरं साहित्यसौहितकम् ।**
**तत्त्वं सांस्कृतिकं निसर्गमधुरं सत्यं शिवं सुन्दरम् ।**
**साङ्गोपाङ्गसमस्तवाङ्मयकला शिल्पादि सम्भाषितम् ।**
**श्रौतस्मार्त्तमये सुवर्णकलशेऽस्मिन् राजते संस्कृतम् ।"**

संस्कृतसाहित्ये भारतस्य संस्कृतिः, सभ्यता, ज्ञानभण्डारश्च सकलं विराजन्ते । सदाचारः,गर्भधानादारभ्य षोडशसंस्काराः,संस्कृतेन एव परिपाल्यन्ते । अतः भारतीयानां जीवनेन सह संस्कृतं युक्तम् । संस्कृतस्य मूल्यायनकृते बहूनि पुस्तकानिः भवन्ति । सर्वत्रापि एतत् सिद्धं भवति यत् भारतस्य संस्कृतेः वाहिका भाषा संस्कृतम् । इयं भाषा सकल - ज्ञानस्य आकारः । भाषातात्विकदृष्ट्या अस्य महत्त्वं सर्वथा अनश्वीकार्यमेव । संस्कृतस्य महत्त्वं ज्ञात्वा वैदेशिकैः अस्य प्रभुत्वभावेन अध्ययनं कृतम् | बहिर्भारते बहुषु विश्वविद्यालयेषु संस्कृतस्य अध्ययनं क्रियते ।अधुना भारतवर्षे वातावरणे नपरिवर्तनं परिलक्षते । बहवः संस्कृतप्रेमिणः संस्कृतज्ञानवन्तः राजनीतिक्षेत्रेषु प्रतिष्ठिताः । अतः संस्कृत -शिक्षायाः प्रसारः भारतवर्षे सर्वत्र भवति । वाराणसी प्राचिनं भारते संस्कृतशिक्षायाः मुख्यपीठम् आसीत् । अधुनापि तत्र संस्कृतं तन्महत्त्वं विद्यते एव । प्रमुखाः संस्कृतविद्वांसः तत्र विश्वविद्यालये महाविद्यालयेषु च अवस्थापिताः पुण्यपत्तने दक्षिणात्ये संस्कृतशिक्षायाः मुख्यपीठं प्रतिष्ठितम् । अस्माकं देशे सर्वत्रापि विश्वविद्यालयेषु संस्कृताध्ययनं भवति । अधुना पण्डितानां मध्ये एकः अभूतपूर्वोत्साहः दृश्यते । अधुना शिक्षाक्षेत्रेषु राजनीतेः प्रवेशः सर्वत्रापि दृश्यते । अस्यां परिस्थितौ तद्विदः ज्ञानसागरमन्थकाः विशेषज्ञाताः राजनीति क्रीडायाम् असमर्थाः भूत्वा शिक्षानुष्ठानेषु अवस्थापिताः न भवन्ति । व्यासवसिष्ठऋषयः इव ते समाजस्य अन्तराले स्थित्वा ज्ञानान्वेषणं कृतवन्तः । संस्कृतस्य श्रीवृद्धिः, साधितः भवति । संस्कृतस्य गौरवम् । अतः संस्कृतभाषा अमृतभाषा । अस्याः भाषायाः विलोपः कदापि न सम्भवः । संस्कृतस्य उन्नतये छात्राः, शिक्षकाः, प्रशासकाः, राजनीतिमुख्याः सर्वेऽपि यत्नशीलाः भवेयुः । यतः संस्कृतम् अस्माकं गर्वगौरवं च ।

**जयतु संस्कृतम् जयतु भारतम् ।।**

**सन्दर्भग्रन्थाः** - :

1) संस्कृतसाहित्यस्यइतिहासः 2) ओडिआ प्रबन्धरत्नाकरः



# करोनाकाले पठनं पाठनं च

**Atheeda C.,**
SS -I, Roll No. -09

विद्यालयः इत्युक्ते तत्र केवलं विद्या दीयते । अपि तु उतमाः अनुभवाः, छात्राणां विकासः, सक्रियात्मकताया : वर्धनमित्यादयः भवन्ति । पाठन - पठनप्रवृत्ति: विद्यालये चलति इत्यतः गुरुशिष्यसम्बन्धः दृढः तथा स्नेहपूर्णश्च भवति । छात्राणां व्यक्तित्वविकासे विद्यालयस्य प्राधान्यम् अत्यधिकं वर्तते । अध्यापनं विद्यालये अस्ति चेत् छात्राणां स्तरः कीदृशी वर्तते इति अध्यापकेन ज्ञातुं शक्यते । किन्तु कोरोणाकाले आन्लैन् (online) माध्यमेन कक्षा चलति इत्यतः कष्ट: जायते । पठनाय दूरदर्शनं, जङ्गमदूरवाणी इत्यादीनि निर्धनिकानां हस्ते न वर्तन्ते इत्यतः, ते अत्यधिकं कष्टम् अनुभवन्ति । तरङ्गसमस्या अन्यः प्रश्न: भवति । विषयम् अवगन्तुं छात्राः कष्टम् अनुभवन्ति । मानसिकप्रश्ना: नेत्रसमस्याः इत्यादयः अत्यधिकं वर्तन्ते । पठनाय आन्लैन् (online) कक्ष्या उत्तमं वातावरणं न ददाति । प्रातः आरभ्य कक्ष्या चलति इत्यतः कक्ष्यायाम् एकाग्रतया उपवेष्टुं न शक्यते। गृहे विद्यमानजनानां विद्याभ्यासयोग्यता न्यूना भवति चेत् सा अपि लघुच्छात्राणां पठने प्रतिकूलरूपेण तिष्ठति । कारणम् आन्लैन् (online) कक्षायाम् अध्यापकः सीमित अस्ति । अतः पठनाय गृहस्थानां साहाय्यम् अनिवार्यं वर्तते । ते तु तेषां ज्ञानाधारेण एव स्वपुत्रं वा पुत्रीं वा पाठयितुं शक्नुवन्ति । पाठ्येतरप्रवृत्तिषु छात्राणां सामर्थ्यम् अधिकं भवति । निम्नस्तरीयच्छात्राः पाठ्येतरविषये अत्यधिकं सामर्थ्यं प्रदर्शयन्ति । तेषां विकासे एतादृशकक्षा प्रतिकूला भवति ।

कोरोणाकाले पाठने अपि समस्याः सन्ति । सामान्यतया कोरोणाकालातः पूर्वम् अध्यापका: विद्यालये पाठयन्ति स्म । तदा, छात्राणां स्तरः कीदश: वर्तते तेषां मानसिकस्थितिः कथमस्ति, छात्राणां कृते पठनाय वातावरणम् अस्ति वा न वा इत्यादयः अध्यापकै: ज्ञातुं शक्यते । विद्यालये पाठयन्ति चेत् समयस्य उचितप्रयोगः, ज्ञातांशस्य दृढीकरणम् इत्यादयः कर्तुं शक्नुवन्ति । परीक्षाणां द्वारा छात्रणां स्तरः, बुद्धिकौशलं, कार्यशक्ति: च निश्चीयते । छात्राणां मूल्याङ्कनमपि कर्तुं शक्नोति । इदानीं तु छात्राः गृहे कथं पठन्ति ? कथं लिखन्ति ? कथं व्यवहरन्ति ? अवगच्छन्ति वा न वा इत्यादिकम् अध्यायकाः ज्ञातुं न पारयन्ति । अत: छात्रेभ्यः मार्गदर्शनं प्रोत्साहनम् इत्यादयः समीचीनरूपेण दातुं न शक्यन्ते ।

अध्यापकाः छात्राणां विषये इतोऽपि श्रद्धैः भाव्यम् । छात्राणां समस्यां ज्ञातुं दूरवाणीमाध्यमेन सम्पर्क : करणीय: । ग्रन्थालये विद्यमानपुस्तकानि छात्रेभ्य: दातुं प्रयत्नः करणीयः | online माध्यमेन स्पर्धाः इत्यादयः कारयन्ति चेत् उत्तमं भविष्यति ।



# देशस्य उन्नतये छात्राः

**Sruthy. P. Surendran**,
SS -I, Roll No. – 50

**देशस्य पुरोगमनार्थं छात्राणां प्राधान्यं कियत् अस्ति इत्यस्य बोधनार्थं प्रबन्धस्यास्य रचनां करोमि** । अद्यतन युवकाः एव श्वस्तन राष्ट्रनिर्मातारः । युवकाः छात्राः एव । अस्माकं छात्राः एव देशस्य श्रेष्टाः । साम्प्रतं ते एव देशस्य निर्माणे प्रधानभूताः भवन्ति ।

सर्वेषां व्यक्तित्वम् आदौ तेषां कुटुम्बादेव जायते, अनन्तरं विद्यालयात् , तदनन्तरं समाजात् च । विद्यालयः व्यक्तित्त्वनिर्माणे अत्यधिकं प्राधान्यम् आवहति । शिक्षा तत्र प्रधाना वर्तते । शिक्षणेन एव एतत् सर्वं सम्भवति । शिक्षया एव सर्वेषां छात्राणां चरित्रनिर्माणं , सर्वविषयाणां ज्ञानं , कर्तव्याकर्तव्यानां बोधनम् , साम्प्रतिकविषयाणाम् अवगमनं च जायते ।

तत्र सहायकाः भवन्ति अध्यापकाः । ते मार्गदर्शकाः आदर्शपुरुषाः च भवन्ति । अध्यापकाः उत्तमशिक्षणेन छात्राणां व्यक्तित्त्वं निर्मान्ति । छात्रेषु आन्तरिकरीत्या काः शक्तयः, प्रतिभाः च गौणरूपेण वर्तन्ते ताः ज्ञात्वा बहिरानयतुं शिक्षकाः प्रयत्नं कुर्वन्ति । अतः शिक्षकाः तेषां प्रतिभां शक्तिं च वर्धयितुं पारयन्ति ।

छात्रेषु समाजस्य उन्नमनार्थं बहूनि उत्तरदायित्वानि सन्ति । अधुनातनकाले छात्राः समाजस्य उन्नमनार्थम् अनेकाः प्रवृत्तयः कुर्वन्ति । विद्यालयजीवने देशस्य उन्नमनार्थं क्रियमाणेषु कार्येषु एकं भवति वृक्षारोपणम् । न केवलं वृक्षारोपणं अपि तु तेषां संरक्षणं , पालनं, पर्यावरणसंरक्षणं, तस्य महत्त्वम् , आवश्यकता, कथं करणीयम् इत्यादि विषयान् अधिकृत्य ज्ञानं विद्यालयात् एव संजायते । तदनुसृत्य प्रवर्तनं कर्तुं छात्राः उत्सुकाः भवन्ति । छात्राः वृद्धजनानां संरक्षणाय विविधकार्याणि कुर्वन्ति । तेषाम् आवश्यकतानुसारं वस्त्रं, भोजनं, साधनसामग्र्यः च दीयन्ते । प्रकृतिक्षोभादिषु नष्टम् अनुभवानां जनानां रक्षां कर्तुं, संरक्षणाय, आवश्यकसाधनानाम् आनयनाय च समवासे (Camp) मध्ये मार्गदर्शकरूपेण छात्राः एव अधिकतया प्रवर्तनं क्रियमाणाः दृश्यन्ते ।

निर्धनानां छात्राणां, जनानां च कृते साहाय्यहस्तरूपेण छात्राणां संघाः सन्नद्धाः सन्ति । ते आर्थिक – शैक्षिक – सामाजिकमार्गदर्शनादिकं दत्वा साहाय्यं कर्वन्ति । छात्राः विद्यालयेषु स्वयमेव शाकादीनां कृषिकार्यं कृत्वा तानि शुद्धशाकानि एव मध्याह्ने भोजनार्थम् उपयुज्यन्ते । एतत् कार्यं अस्मिन् समाजे सर्वेषु जनेषु कृषिकार्ये तात्पर्यं जनयितुं बहु उपकारकः भवति । एतत् कार्यं कर्तुं विद्यालये अनेकाः संघटनाः सन्ति । तेषु प्रधानाः भवन्ति **एन्. एस्. एस्, एन्. सि. सि, स्कौट् & गैड्** इत्यादयः । एतासु संघटनासु बहु कार्याणि छात्राः स्वीयप्रवर्तनेन अवगच्छन्ति । छात्राः परेषां कृते साहाय्यं कर्तुं, स्नेहं प्रकटयितुं च उत्सुकाः भवन्ति । न केवलं विद्यालये,अपि च समाजे अपि ते कार्यं कुर्वन्ति । सेवामनोभावः, प्रकृतिस्नेहः, सहनस्वभावः च छात्रेषु जायते । समाजे विद्यमानेषु गतागतविषयेषु, जीवरक्षणकार्येषु च जनानां बोधनाय, नियन्त्रणाय नियमानां पालनं कर्तुं च कक्षाः अपि

विद्यालये प्रचलन्ति । विद्यालये प्रचलिताः प्रधानदिवसाः अपि छात्राणाम् उन्नमनार्थं साहाय्यं कुर्वन्ति, यथा पर्यावरणदिवसः, पुस्तकदिवसः, मातृदिवसः, पितृदिवसः, कर्षकदिवसः इत्यादयः प्रतिवर्षं विद्यालये आचरन्ति। अनेन छात्राः कथं पर्यावरणं कृषिं च संरक्षणीयं?, कथं पुस्तकेषु विद्यमानज्ञानम् आर्जनीयम्?, तत् कथम् अस्माकं जीवने प्रावर्तिकं करणीयम्?, जीवने शिक्षायाः आवश्यकता का?, समाजे परेषां सहाय्यं कथं कर्तुं शक्यते?, कथं कुटुम्बे समूहे च व्यवहारः करणीयः?, धूम्रपानं सुरापानम् इत्यादिभ्यः कथं रक्षां प्राप्तुं शक्नुमः? इत्यादि कार्ये ज्ञानं प्राप्तुम् अवगन्तुं च विद्यालयाः गुरवः मित्राणि च साहायकाः भवन्ति।

ये छात्राः विद्यालये सम्यक् रूपेण निर्देशेन उत्सुकेन च नेतारः भवन्ति, ते एव भाविनिकाले समाजस्य उन्नमनार्थम् अधिकतया प्रयत्नं कुर्वन्ति। सम्प्रतिककाले विद्यमानानां कार्याणां बोधनं झटित्येव छात्रैः अवगन्तुं शक्यते। पाठ्यक्रमः, पाठ्यचर्या च छात्रेषु अधिकज्ञानार्थम्,अनेकविषयाणाम् अवगमनार्थं च सहायकाः भवन्ति l देशभक्तीनाम् अभावः एव समाजस्य उन्नमनाय प्रधानदोषः भवति।

अतः वयं छात्राः देशस्य उन्नमनार्थं प्रयत्नं कर्तुम् उत्तरदायिनः एव। अस्माकं देशस्य पालनार्थं वयं उत्सुकाः भवेम।



## वैदिककालिकस्त्रीणां कर्मचारितासमीक्षा

**Vrindha R.,**
SS -I, Roll No. – 16

**"यत्र नार्यस्तु पूज्यन्ते, रमन्ते तत्र देवताः"** इत्युद्घोषयतां धर्मशास्त्राणां प्रसारभूरियं भारतं लोके अनितर- सामान्यं श्रेष्ठस्थानं स्त्रीषु कथयामास | वैदिकसाहित्येबह्वय: स्त्रैणदेवता: माहात्म्यम् अतिरेकेण विराजमाना: दृश्यन्ते । किन्तु "न स्त्रीस्वातन्त्र्यमर्हतीति" मनुवचनमुद्धृत्य वैदिककालीनानां तत्पश्याद्भवानाञ्च भारतस्त्रीणां, दैन्यतां प्रदर्शयितुं बहवः इतिहासज्ञाः प्रयतमाना: दृश्यन्ते। प्राचीनभारतीया: पुरुषाः पुरोहितवर्गीयाः स्त्रियमन्तर्जनं महानस: एक: उपजीवन्तीमेव विधातुमिच्छन्ति । प्राचीनाः स्त्रीविरोधिनः आसन् इति च केषांचित्वादः। अत एव ताभ्यः विद्यां, स्वतन्त्रतां, सामाजिकीकर्मचारितां, राजतन्त्रादिषुनियतस्थानित्वादिकं वा न अनुमातम् इति तेषाम् अवगतिः । किन्तु प्राचीनसंस्कृतवाङ्गमयं नाम अनुशीलनसमयेवादपङ्क्तेरस्या: विरोधिन: केचनपरामर्शाः, कानिचन निदर्शनानि चोपलभ्यन्ते । तत्र काश्चन स्त्रियः, आचार्यः, कलोपासिन्यः, सम्रांक्ष्यः, मठाः, युद्धतन्त्रज्ञाः,, न्यायाधिपाः च इति प्रसिद्धाः । अत एव एतयो: विरुद्धयोः द्वयोः वादयोः साधुत्वासाधुत्वयोः विवेचनम् अवश्यं भावेदित्यतः प्रबन्धोऽयं तदर्थं निबद्ध्यते।

**उषासूक्ते** प्रयुक्ताः केचन नारीविशेषकशब्दाः सार्थं श्रध्येयाः । यथा ...

* **विभावरी -** प्रकाशवती, विद्याधर्मादिनिष्ठा इत्यर्थः।
* **अश्वावति -** सर्वत्र गमनवती, अश्विनीः, इव बलवत्प्राणधारिणी इत्यर्थः ।
* **गोमती** – गोसंरक्षणकर्ती, वैदिकनारी, कृषीवला, वाणिका, चासीदिति संसूच्यते ।

**स्त्रीणां यज्ञाधिकारः -**

स्त्रियः -: यज्ञोपवीतधारणार्थम् अधिकारिण्यः आसन् । यागाग्नेः संरक्षणं तस्याः दायित्वम् आसीत् । स्त्री अपि उपनयनसंस्काराय अधिकृता आसीत् इति श्रुतयःएव प्रमाणीकुर्वन्ति । ऋग्वेदः विश्ववारायाः यज्ञाधिकारः सूचयति ।

**स्त्रियां मन्त्रद्रष्टुत्वं दार्शनिकत्वं च -**

आध्यात्मिकेषु भौतिकेषु बौद्धेषु च विषयेषु तर्कादि व्यवहारेषु च स्त्रियः अग्रगण्या: आसन् इति गार्गी, मैत्री, संकंत, निवरी चेत्येतेसां स्त्रीणां वेदोपलब्धात् परामर्शात् ज्ञायते । ऋग्वेदे मन्त्रद्रष्टारः ऋषयः त्रिषु विभागेषु वर्तन्ते ।

1) सम्पूर्णस्य मन्त्रस्य द्रष्टारः ।

2) मन्त्रस्य अर्धभागस्य अंशस्य वा दृष्ट्यः।

3) मन्त्रद्रष्टुत्वेन यद्यपि व्यपदिष्टाः तथापि सन्निग्धाः।

**युद्धभूमौ स्त्रीणां सान्निध्यम् -**

विश्पका, वध्रिमती, मुद्गकानि इत्येताः स्त्रीयः युद्धौ भागम् अग्रहीरन् इति ऋग्वेदे दृष्टान्तेन अवगम्यते ।

**राजनैतिकमण्डले स्त्रीणां सान्निध्यम् -**

तारा, शूर्पणखा, कौसल्या, कैकेयी, कुन्ती, गान्धारी इत्येताः स्त्रियः राजनीतिज्ञाः आसन् इति प्रसिद्धम्।

एवमेव मन्त्रद्रष्टारः, ब्रह्मवादिन्यः, ऋषिकाः, आपकप्रभृतयः, अध्यापिकाः पण्डिताश्च । मैत्रेयी, गार्ग्याद्याश्च स्त्रीणां कर्मचारिणीरूपं समाज-भाग-दायित्वं स्पष्टं वेदेषु । वेदकालसमाजः स्त्रीषु यन्माहात्म्यं कल्पितं तत्ताभ्यः प्रदत्तैः स्थानमानादिभिः अपि निर्णीतम् आसीत् ।

पाणिनिना अपि आचार्याणी, उपध्याया इत्यादीनां पदानां प्रयोगः कृतः, इत्यतः वेदकाले तदुत्तरे च भारतं स्त्रीणां पुरोगतये प्रचोदकमेव वर्तते इति गण्यते ।

**अनुशीलितग्रन्थाः** –

मूलरामायणम् – आदिकविः वाल्मीकिः,

सर्वदर्शनसंग्रहः, वैदिकसंस्कृतिः, मनुस्मृतिः च ।



**नारियों के लिए पाठशालाएं -**

वेदों में उल्लेखित कुछ मन्त्र इस बात को रेखांकित करते हैं कि कुमारियों के लिए शिक्षा अपरिहार्य एवं महत्वपूर्ण मानी जाती थी। स्त्रियों को लौकिक एवं आध्यात्मिक दोनों प्रकार की शिक्षाएं दी जाती थी। सह शिक्षा को बुरा नहीं समझा जाता था।

**छात्रावासों का प्रबंध -**

प्राचीन भारत में गुरु के प्रत्यक्ष निरीक्षण में रहकर विद्योपार्जन श्रेष्ठ माना जाता था। अधिकांश विद्यार्थि गुरु कुंलो में ही रहते थे। गुरु जन अपने घर पर ही विद्यार्थि के आवास निवास की व्यवस्था करते थे। भोजन का कार्य भिक्षा वृत्ति द्वारा चलता था और आज सरकार के द्वारा बडे बडे छात्रावासों का कार्य चल रहा है जहां विद्यार्थियों को पठन पाठन में सुविधा मिल रही है। ये पद्धति वर्तमान समय में भी चल रही है।

**सह शिक्षा एवं पृथक शिक्षा -**

प्रागैतिहासिक काल में साहित्यिक तथा व्यवसायिक हर प्रकार की शिक्षा की व्यवस्था परिवार में ही होती थी। प्रायः कन्याओं को भी उच्च शिक्षा प्राप्त करने केलिए घर के बाहर जाना पड़ता था। और आज गांव में भी शिक्षा दी जा रही है। आज शिक्षा पद्धति उच्च स्तर पर चल रही है। यही भारतीय शिक्षा पद्धति का विकास हो रहा है।



## भाषाशिक्षायाः प्राधान्यम्

**Nidisha V.,**
SS -I, Roll no. - 37

मानवजीवनस्य सुविकासाय भाषाज्ञानम् अनिवार्यम्। भाषा मानवविचाराणामभिव्यक्तये सर्वोत्तमं साधनम्। एतदभावे मानवजीवने विकासप्रक्रिया नैव पूर्यते। मानवा इमां भाषां स्वसमाजात् जानन्ति। समाजाभावे भाषा ज्ञातुं न शक्यते। भाषायाः मानवजीवनस्य च गाढतरसम्बन्धः अस्ति। स्वकीयान् विचारान् मानवाः यदा अन्येभ्यः जनेभ्यः प्रकटयितुमिच्छन्ति तदा भाषामेव सुप्रयुङ्क्ते।

सर्वे जन्तुजीविनः स्वविचाराणां विनिमयं कुर्वन्ति। किन्तु नवमानवैः उपयुज्यमाना तावत् स्पष्टा भाषा नास्ति। उदाहरणार्थं मधुमक्षिकाः नृत्येन, पिपीलिकाः स्वशरीरगन्धेन इति विभिन्नप्रकारेण जन्तवः स्वविचारविनिमयं प्रकटीकुर्वन्ति | प्रकृतेः निरीक्षणं करोति चेत्, तत् सर्वम् अस्माभिः ज्ञातुं शक्यते। सर्वे जीवजातीनां प्रत्येकं विचारविनिमयमार्गम् अस्ति इति उक्तं खलु, तत्र तु विशिष्टं भवति भाषा | मानवानां

स्वविचारविनिमयं भाषायाः सहायेन सिध्यति । भाषां विना मानवजीवनम् अतीव दुष्करं भवति । मूकाः अपि आङ्ग्यभाषया स्वविचारान् अन्येषां पुरतः प्रदर्शयन्ति, किन्तु तत् सर्वथा न साध्यम् । भाषा नास्ति चेत् सर्वे जनाः मूकसमान इति विचारः |

भाषा अस्माकं जीवने महती उपयोगिनी भवति । प्राचीनकालात् आरभ्य सर्वेषां कविहृदयानाम् इष्टं विषयं भवति स्वभाषावर्णनम् । मातृभाषावर्णने कवयः सर्वथा वाचाला: | केरलीय: श्री वलुत्तोलनारायणमेनोन् महाभागेन उक्तम् अस्ति "अन्याः भाषा: धात्री रूपेण भवन्ति ,मानवानां जननी मातृभाषायामिम् इति । मातृभाषा इव अन्यभाषा नास्ति इति कवेरभिप्रायः ।

मातृभाषायां सर्वे जनाः बाल्यकालात् आरभ्य दक्षतां प्रानुवन्ति । कस्यचित् शिशोः भाषाभ्यासः कथं भवतीति यदि परिशीलयामः, तर्हि सः आदौ तं परितः वर्तमानानाम् अन्येषां मुखात् विभिन्नेषु प्रसङ्गेषु उपयुज्यमानां भाषां श्रुणोति । बहुकालं यावत् श्रवणमेव करोति, तदनन्तरम् एकैकं वर्णं शब्दं वा क्रमशः उच्चारयति । आरम्भकाले अर्थम् अजानन् अपि शिशुः अन्यैः उक्तं श्रुत्वा तदेव अनुकरोति । ततः शब्दानाम् अर्थमवगम्य क्रमश: लघुभिः वाक्यैः सम्भाषणं करोति । तदनन्तरं सः पाठनस्य आरम्भं करोति । तत्पश्चात् लेखनञ्च। श्रवणं भाषणं पठनं लेखनम् इति सोपानरूपेण सहजतया मानवाः मातृभाषायां विशेषक्षमताम् आर्जयन्ति । अन्यभाषापठनम् सोपानवत् नास्ति इति कारणतः अन्यभाषापठनं किञ्चित् दुष्करं भवति । सर्वेः जनाः यावत् शक्यं अन्यभाषासु दक्षतां सम्पादयेयुः, तावत् सः सततं मातृभाषास्मरणम् अपि अवश्यं कुर्यादेव ।



## भगवद्गीतादृष्ट्या जीवने ज्ञानस्य प्राधान्यम् ।

**शङ्करन् ओ. एम्.,**

SS -I, Roll No. – 51

**उद्देश्यानि -**

1. भगवद्गीतायांशिक्षायाःप्राधान्यमवबोधनार्थम् ।
2. पठनेउत्साहवर्धनार्थम् ।
3. ज्ञानस्यआवश्यकताबोधनार्थम् ।

“ ज्ञा ” अवबोधने इति ज्ञानम् । ज्ञानं द्विविधम् अस्ति, आध्यात्मिकज्ञानं,लौकिकज्ञानं च इति ।

ज्ञानं ( इमं योगम् ) पुरातनम् एव न तु नूतनम् ।अस्य ज्ञानस्य पुरातनत्वं भगवद्गीतायामपि वयं द्रष्टुं शक्नुमः ।

**"इमं विवस्वते योगं प्रोक्तवानहमव्ययम् ।**
**विवस्वान् मनवे प्राह मनुरिक्ष्वाकवेऽब्रवीत् ।।"** (४/१ )

**"एवं परम्परा प्राप्तम् इमं राजर्षयो विदुः ।**
**स कालेनेह महता योगो नष्टः परन्तपः ।।"** (४ / २)

भगवता अर्जुनं प्रति एवमुक्तं ज्ञानं पुरातनं एव न तु नूतनमिति। एवं परम्परायाः प्राप्तः योगः कालेन नष्टः। नाशस्य कारणं तु अपात्रायोपदेशः । अपात्रेण कथितोपदेशः तथा स्वाध्यायराहित्यमेव । ज्ञानस्य आवश्यकता जीवने कथं भवति इति उच्यते चेत् यस्य कृते ज्ञानम् अस्ति, सः अन्यैः सह सुव्यवहारं करोति यस्य कृते ज्ञानं नास्ति सः दुर्व्यवहारं कुरोति । " **विद्या ददाति विनयं "** एतत् पण्डितेन उक्तं सुभाषितम् । विद्या अथवा ज्ञानमस्ति चेत् सः विनयेन अन्यैः सह सुव्यवहारं करोति । तथा च ज्ञानेन आत्मप्रकाशः अपि भवति । समाजे विद्यालये अपि सूक्ष्मतया यदि पश्यति चेत् अवगम्यते यत् ज्ञानाय जनाः चतुर्विधप्रयत्नं कुर्वन्ति एव । आध्यात्मिकदृष्ट्या गीतायां भगवता उक्तमस्ति–

**" चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन ।**
**आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ।।"** ( ७/ १६)

अस्मिन् श्लोके ईश्वरप्राप्तौ भजनं चतुर्विधं भवति इति उक्तम् । तान्येव लौकिकदृष्ट्या शिक्षादृष्ट्यापि वक्तुं शक्नुमः।

(1) प्रथमं केवलं प्रमाणपत्रप्राप्त्यर्थमेव ।

(2) द्वितीयं केवलम् अवगमनायपठनार्थमेव ।

(3) तृतीयं तु केवलमर्थम् अथवा धनलाभाय, तस्मात्धनंकथम् आर्जयितुं शक्यते इति एव पश्यन्ति ।

(4) चतुर्थम् अनुभवज्ञानार्थं केवलं स्वार्थलाभाय न , अपि तु अनेन ज्ञानेन समाजस्य उत्कर्षः कथं भवति इति चिन्तयित्वा प्रयतते ।

अत्र चतुर्विभागेषु श्रेष्ठः ज्ञानी एव भवति । यः ज्ञानी स्वजीवने प्राप्तं ज्ञानं प्रयुज्य ज्ञानमार्गे स्वजीवनं सम्यक् नयति सः नित्ययुक्तः इति भगवता उक्तम् ।

**" तेषां ज्ञानी नित्ययुक्तः "** ७।२७

पठनसमये केवलं पठनविषये तथा तस्य स्वाध्याये एव श्रद्धा आवश्यकी न तुअन्यविषयेषु । यदा श्रद्धया पठन्ति तदा ज्ञानं प्राप्नुवन्ति । **"श्रद्धावान् लभते ज्ञानम् "** ज्ञानिनः लक्षणं भगवद्गीतायाः द्वितीयः अध्याये स्थितप्रज्ञलक्षणरूपेण वयं द्रष्टुं शक्नुमः ।

**प्रजहाति यदा कामान् सर्वान् पार्थ मनोगतान् ।**
**आत्मन्येवात्मना तुष्टः स्थितप्रज्ञस्तदोच्यते । (२/५५)**

यः सर्वान् मनोगतान् कामान् प्रजहाति, ' यः आत्मन्येवात्मना तुष्टः सःस्थितप्रज्ञः इति उच्यते । सः एव ज्ञानं प्राप्नोति ।मनसः स्वभाव अर्जुनेनापि उक्तमस्ति • "चञ्चलं हि मनः कृष्ण इति । मनः सदा चञ्चलं भवति । अत्र मनोनियन्त्रणम् तथा आत्मनियत्रणञ्च आवश्यकम् । यदा विद्यार्थी आत्मनियत्रणत्वेन पठति तदा एव ज्ञानप्राप्तिः भविष्यति । स्थितप्रज्ञतार्थं मनसः नियत्रणम् आवश्यकम् एव । अनेन स्वाध्याये निरतः भवितुम् शक्यते। स्वाध्यायेन एव सिद्धिः अथवा ज्ञानस्य स्वप्रकाशकत्वम् । तैत्तिरीयश्रुत्यामपि "स्वाध्यायान्माप्रमदः" इतितथा च गीतायांस्वाध्यायःवाङ्मयःतपःइतिभगवताउक्तमस्ति ।

**अनुद्वेगकरं वाक्यं सत्यं प्रियहितं च यत्।**
**स्वाध्यायाभ्यसनं चैव वाङ्मयं तप उच्यते ।।" ( १७/१५)**

कः अन्यैः सह उद्वेगविहीनं वाक्यं वदति? कः सत्यं वदति ? कः प्रियं वदति? कः हितं वदति? तथा च स्वाध्यायनिरतः निरन्तराभ्यासी सः ज्ञानं प्राप्नोति। एतदेव वाक्यं तपते इति कथितम्। ज्ञानं कथं पुरातनम् इति चेत्, ज्ञानं सर्वेषाम् अन्तर्निहितशक्तिः भवति। तस्य प्रकटीकरणमेव स्वाध्यायेन भवति।

स्वामिविवेकानन्देन उक्तम् -

**" मानवे अन्तर्निहितपूर्णतायाः आविष्करणमेव शिक्षा " इति। पूर्णतास्तु सनातनमेव।**

एतदन्तर्लीनज्ञानस्य आविष्करणेन समाजस्य उत्कर्षः एव शिक्षायाः प्रथमं प्रयोजनम् इति सिद्ध्यति। अनेन ज्ञानेन व्यक्तिः पूर्णतां प्राप्नोति, आचार्यः अनेन कारणेन स्वाध्यायेन सह शिक्षिताः भवन्तु इति वदन्ति। अस्योपदेशस्य प्राधान्यं गीतायाः स्वाध्यायेन प्राप्तुं शक्यते इति अनेन सिध्यति।

**सहायकग्रन्थाः -**

1. भगवद्गीता - शङ्करभाष्यम् ।
2. गीतामृतबोधिनी – स्वामी अमृतानन्त
3. गीताहृदयम् - स्वामिविद्याप्रकाशानन्दगिरि।
4. गीता प्रवचनम् - आचार्यविनोबाभावे।



# शिक्षायां केन्द्रसर्वकारस्य भूमिका

**मृदुला ओ.,**
SS -I, Roll No. – 04

**उद्देश्यम्** –

“अस्माकं भारते शिक्षाक्षेत्रे केन्द्रसर्वकारः शिक्षायाः सुदृढीकरणाय विविधयोजनानां निर्माणे क्रियान्वयने च निरन्तरप्रयत्नं करोति । वयं छात्राध्यापकाः तस्मिन्विषये किमपि न जानीमः | अतः सर्वेछात्राध्यापका: अस्मिन् विषये किञ्चित् गरूकाः भवन्तु इति विचिन्त्य मया यत्ज्ञातं तत् मया अत्र प्रतिपाद्यते। " अस्माकं भारतं विकसितं राष्ट्रं नास्ति। लोकजनसंख्यायाः विषयं पश्यामः चेत् तत्र भारतं द्वितीयस्थाने वर्तते। यदि अत्रत्याः सर्वेजनाः विद्यासम्पन्नाः चेत् अस्माकं भारतं विकसितराष्ट्रं भविता इत्यत्र नास्ति संशयः। भारतीयानां शिक्षणार्थं केन्द्रसर्वकारेण शिक्षाक्षेत्रे अनेकानि कार्याणि क्रियन्ते एव।भारतस्य स्वतन्त्रतायाः अनन्तरं शिक्षाक्षेत्रे केन्द्रसर्वकाराः बहूनि धनानि व्ययीकर्तुम् आरब्धवन्तः । शैक्षिक – कार्याणां विकासार्थं केन्द्रसर्वकारेण सर्वेषां राज्याणां कृते, विश्वविद्यालयानां कृते च धनं दीयते। छात्रैः शिक्षां प्रति आकर्षणाय, तेषां

पठनस्थ साहायार्थम् उन्नमनार्थं च केन्द्रसर्वकारः छात्रवृत्तिं ददाति। अपि तु सम्पूर्णेऽस्मिन् अपि | भारतवर्षे षड्तः चतुर्दशवयान्वितछात्राणां कृते अनिवार्यतया सार्वभौमिकशिक्षायाः सम्बन्धे राज्यसर्वकारीयोत्तरदायित्वेषु भागग्रहणं स्वीकरोति । राष्ट्रियाध्यापकशिक्षा परिषद्, विश्वविद्यालय- अनुदानआयोगः, केन्द्रीय-विश्वविद्यालयसंस्थादीनां द्वारा केन्द्रसर्वकारः शैक्षिकधर्मस्य प्रवर्तनं कुर्वन् अस्ति । भारतसर्वकारेण भारतीयप्रोद्योगिकीसंस्थानं, भारतीयप्रबन्ध संस्थाना - नि च संस्थापितानि | अपि च इतरराष्ट्रैः सहशैक्षिकसांस्कृतिकसम्बन्धस्थापनम्, संयुक्तराष्ट्रशैक्षिक, वैज्ञानिकतथासांस्कृतिकसङ्घठनानाम् इत्यादीनाम् अन्ताराष्ट्रिय संघठनानां कृते सहयोगप्रदानं कृतम् । संस्कृतशिक्षाक्षेत्रे अपि केन्द्रसर्वकारैः बहूनि कार्याणि कृतानि वर्तन्ते । संस्कृतपठनस्य प्रोत्साहनार्थं संस्कृतछात्राणां कृते छात्रवृत्तिं ददाति । २०१९ तमेवर्षे ‘राष्ट्रियसंस्कृतसंस्थानम्' केन्द्रीयसंस्कृतविश्वविद्यालयत्वेन लोकसभाअङ्गीकृता। इदानीं भारते संस्कृतस्य त्रयः केन्द्रीयविश्वविद्यालया सन्ति । तेषु अन्यतमः भवति “केन्द्रीयसंस्कृतविश्वविद्यालयः" केन्द्रसर्वकारः राष्ट्रियशिक्षानीतौ - 2020 संस्कृतस्य महत्त्वपूर्णप्राधान्यं च दत्तं वर्तते । संस्कृतं त्रिभाषासूत्रस्य मुख्याधारविकल्पेन सह विद्यालयेषु उच्चतरशिक्षायाः सर्वेषु स्तरेषु छात्राणां कृते महत्त्वपूर्णेन समृद्धेन विकल्पेन सहप्रदीयते । शिक्षायां कालानुगतविकासार्थं केन्द्रसर्वकारस्य आदेशानुसारं राष्ट्रियशिक्षानीतिः आनीता । राष्ट्रियशिक्षानीतिः २०२० इयं २१ शतब्धाः प्रथमशिक्षानीतिः अस्ति । अस्याः लक्ष्यम् अस्माकं देशस्य विकासः अपेक्षितावश्यकतायाः पूर्तिः च। इयं नीतिः भारतस्य परम्परां सांस्कृतिकमूल्यानि च वर्धयति ।अन्य: विषयः अस्ति यत्बालिकानां संरक्षणार्थं तासां पठनार्थं च भारतीयसर्वकारेण जनवरिमासे २०१५ तमे वर्षे जनुवरिमासे **' बेटी पढ़ाओ बेटी बचाओ '** इति योजना कृता। राष्ट्रियशिक्षानीतौ बालिकानां शिक्षाविषये च प्रमुखं स्थानं कल्पितं वर्तते।

**निष्कर्षः** –

एवं हिन्दीभाषायां तथा अन्यभारतीयभाषासु शोधकार्यं तदभिवृद्धिश्च, भारतस्य प्राचीनसंस्कृते: संरक्षणं विकासश्च राष्ट्रस्य विभिन्नभागेषु संस्थितानां केन्द्रीयविद्यालयानां सञ्चालनं, समाजस्य निम्नवर्गेषु, शिक्षायै प्रोत्साहनं, राष्ट्रियैकतायाः सुदृढीकरणाय विविधकारकाणां कार्यक्रमणां च व्यवस्थापनम् इत्यादि बहुविधानि कार्याणि भारतेऽस्मिन्केन्द्रसर्वकार: समुचितरीत्या दृढनिश्चयरूपेण च करोति।

**नूतनपदानि** –

1-केन्द्रसर्वकार: Central government

२ -विश्वविद्यालय: - University

3- छात्रवृत्तिः-Scolarship

4-भारतीयप्रौद्योगिकीसंस्थानम्- Indian Institute of Technology

5-भारतीयप्रबन्धसंस्थानानि - Indian Institute of Management.

6-संयुक्त राष्ट्,शैक्षिक, वैज्ञानिकतथासांस्कृतिकसङ्घठन - UNESCO

7- राष्ट्रियअध्यापकशिक्षापरिषद् - NCERT

8-विश्वविद्यालय – अनुदान-आयोगः- UGC

9-केन्द्रीयसंस्कृतविश्वविद्यालयः- Central Sanskrit University

10-राष्ट्रिय शिक्षानीतिः - New Education Policy.



## साम्प्रतिकयुगे संस्कृतशिक्षाविचाराः

**अमिता मिश्रा,**

SS -I, Roll No. – 19

अस्माकं देशस्यस्य राष्ट्रभाषा हि संस्कृतम् । एतदर्थं सर्वकाराणां स्वीकारस्य पारम्परिकदृष्टया आवश्यकता नास्ति। सर्वस्मिन् युगे भारतवर्षे सर्वेऽपि सज्जनाः पण्डिताः उच्चस्थानीयाः जनाः च संस्कृतभाषया एव स्वमतम् अभिव्यक्तितवन्तः। संस्कृतनाटकेभ्यः ज्ञायते यत् नार्यः, भृत्याः, नीचजनाः च यद्यपि संस्कृतमाध्यमेन वार्तालापं कर्तुं न शक्नुवन्ति स्म, तथापि संस्कृतमवगन्तुं तेषां सामर्थ्यम् आसीदिति । परन्तु आधुनिकयुगे यदा प्रश्नः समायाति का भाषा राष्ट्रभाषा इति । प्रतिष्ठितैः जनैः संस्कृतभाषयाः नाम विस्मृतम् । राष्ट्रभाषाप्रसंगे दक्षिणात्ये विरोधः अभवत् । एतत्तु भारतस्य दौर्भाग्यम् । प्रतिष्ठिताः जनाः संस्कृतं प्रति अनुरागिणः भवन्तु वा न, किन्तु भारतवर्षे संस्कृतवृक्षस्य मूलं सदैव सुदृढं भवति। एवमुच्यते -

**"यावद् भारतवर्षं स्यात् यावद् विन्ध्यहिमाचलौ ।**
**यावद् गंगा च गोदा च तावदेव हि संस्कृतम्" ।।**

राष्ट्रस्यास्य संस्कृतेः वाहिका भाषा संस्कृतम् इति । इयं भाषा सफलज्ञानस्य आधारः अस्याः महत्वं सर्वथा वर्तते एव । विदेशे बहुषु विद्यालयेषु विश्वविद्यालये च संस्कृतस्य अध्ययनं क्रियते । वाराणसीक्षेत्रं प्राचीनभारते संस्कृताध्ययनस्य मुख्यपीठमासीत् । अधुनापि तत्र संस्कृतस्य महत्वं विद्यते । प्रमुखाः संस्कृतविद्वांसः तत्र विश्वविद्यालयेषु विद्यालयेषु च वर्तन्ते। साम्प्रतं संस्कृतशिक्षायाः प्रचारः प्रसारश्च दक्षिणप्रदेशे अधिकतया जायते। तत्र बहवः ग्रन्थाः पण्डितवर्गैः लिख्यन्ते। अतः विश्वे संस्कृतस्य गुणवैभवञ्च दृष्ट्वा इमां भाषां विपश्चितः आद्रियन्ते।

राष्टेऽअस्मिन् संस्कृतस्य उन्नतिः परिलक्ष्यते। तदर्थमपि सर्वे संस्कृतज्ञाः अहर्निशं कार्यं कुर्वाणः वर्तन्ते। अधुना शिक्षाक्षेत्रेषु राजनीतिप्रवेशः सर्वत्रापि दृश्यते । अस्यां परिस्थितौ विशिष्टः विद्वांसः शिक्षाक्षेत्रे प्रवेष्टुं न अर्हन्ति। तेन संस्कृतस्य विकासधारा अवरोधिता भवति। व्यासवशिष्ठादि ऋषयः समाजस्य अन्तराले स्थित्वा ज्ञानस्यान्वेषणं कुर्वन्ति स्म । किञ्च संस्कृतभाषायाः अध्ययनेनापि परमत्वं प्राप्यते स्म । अतः संस्कृतभाषा

अमृतभाषा । अस्याः भाषयाः विलोपः कदापि न सम्भवति । उपयुक्तपठनपाठनेन अस्याः भाषयाः समुन्नतिः भविष्यति। संस्कृतस्य उन्नतये छात्राः, शिक्षकाः, प्रशासकाः, राजनीतिज्ञाः, सर्वेपि यत्नशीला भवेयुः । यतो हि संस्कृतमस्माकं गर्वं गौरवं च । संस्कृतं विहाय भारतस्य गौरवं न परिकल्पयितुं शक्यते ।

**सन्दर्भग्रन्थानां सूची-**


१- उदीयमान भारतीय समाज में शिक्षा - डॉ. रामशकल पाण्डेय ।

२- शिक्षा के दार्शनिक एवं सामाजिकाधार डॉ. एम. एम. माथरुर ।




## स्त्रीशिक्षायाः आवश्यकता


**Chandini K.P.,**

SS -I, Roll no. – 43


शिक्षणं सर्वेषां मानवानां जीवने आधारभूतमावश्यकञ्च भवति । अस्माकं समाजे न तु केवलं पुरुषाः, किन्तु महिलाः अपि सन्ति । अतः यथा पुरुषाणाम् अध्ययनस्य आवश्यकतायाः प्राधान्यम् अस्ति तथा एवमहिलानाम् अध्ययनस्य आवश्यकतायाः प्राधान्यम् अपि अस्ति ।समाजे पुरुषाणां महिलानां च स्थानम् एकम् एव वर्तते । समाजस्य कृते द्वे नेत्रे इव तिष्ठतः पुरुषः महिला च इति मम अभिप्रायः। "**सर्वेषां पुरुषाणां विजयस्य पृष्ठे एकामहिला अवश्यं स्यात्**" इति एकः वादः अस्ति । अहं न जानामि यत्, किमर्थं सा महिला पुरुषस्य पृष्ठे इति । सा पुरुषस्य साकं, पुरुषेण सह स्थित्वा एव विजयकारणं भवेत् । एवं विजयकारणं शिक्षया एव भवितुम् अर्हति। स्वस्य परिवारात् आरभ्य लोकस्य अपि उन्नमनाय महिलानां योगदानम् अनिवार्यम् एव, न तु केवलं पुरुषाणाम् । एवं योगदानाय महिलाः विद्यासम्पन्नाः भवेयुः । विद्या न केवलं किमपि कार्यं कर्तुं नो चेत् प्रकल्पितवेतनं स्वीकर्तुं किन्तु मूल्यवर्धिनार्थम् अस्माकं संस्कारमूल्यमपि वर्धयति । उत्तमरीत्या शिक्षया अभ्यासेन, उत्तमज्ञानं, उत्तमज्ञानेन धैर्यम् ,आत्मविश्वासः च अपि वर्धते । उत्तमविद्यया किं समीचीनं, किम् असमीचीनम् इति विभेदं कृत्वा ज्ञातुं शक्यते । अस्मिन् आधुनिककाले महिलानां कृते विभेदज्ञानम् आवश्यकम् अस्ति । अधुना महिलाः प्रति समूहात्, स्वस्य परिवारात् अपि बहुपीडनानि आगतानि सन्ति । स्वस्य अभ्यस्तविद्यया आर्जितम् आत्मविश्वासेन धैर्येण च एव तेषाम् उपरि उचितमार्गेण प्रत्याक्रमणं कृत्वा विजयं प्राप्तुं शक्यते ।अधुना सर्वत्र महिलानां शिक्षणोत्साहं पश्यामः । विभिन्नेषु क्षेत्रेषु अपि महिलाः स्वसामर्थ्यं प्रदर्शयन्ति । किन्तु इतोऽपि काञ्चन महिलाः अपि सन्ति भारते शिक्षायाः माधुर्यं न आस्वादितवत्यः ।सुशिक्षिता महिला अन्यान् अपि शिक्षणार्थं प्रेरयति । महिलां विना अयं समाजः अपूर्णः अस्ति । अतः एव महिला सम्माननम् आवश्यकम् । एवम् एव महिलानां शिक्षा अपि सम्माननम् आवश्यकं भवति । सुशिक्षिता महिला सर्वत्र पूज्यते ।

**"यत्र नार्यस्तु पूज्यन्ते, रमन्ते तत्र देवताः"**



# संस्कृतशिक्षा एव मूल्यशिक्षा

**Gayathri P. V.,**
SS -I, Roll no. -15

**उद्देश्यानि-**

संस्कृतभाषायां विद्यमानानां विविधमूल्यानां विषये उद्बोधनम् | मूल्यशिक्षायाः आवश्यकताज्ञापनम् । शिक्षा काचित् विशिष्टा आजीवनान्तप्रक्रिया भवति यया मानवाः ज्ञानं प्राप्नुवन्ति, प्राप्तज्ञानस्य वर्धनं कुर्वन्ति । अनया विद्यमानप्रतिभानां बहिरानयनं पोषणं च कर्तुं शक्नुवन्ति । शिक्षा विद्यालयेषु विश्वविद्यालयेषु वा प्राप्यमाणा इति सङ्कुचितदृष्ट्या न वक्तुं शक्यते । विद्यालयीया शिक्षा अतिविस्तृतायाः शिक्षाप्रक्रियायाः सामितरूपं भवति । तथापि विद्यालयीयायाः शिक्षायाः अतीवप्राधान्यमस्ति । अत एव निश्चितोद्देश्यान्यादाय छात्राणां सर्वाङ्गीणविकासं मुख्यतया लक्षीकृत्य च व्यवस्थितरूपेण विद्या प्रदीयते । सर्वाङ्गीणविकासाय तु केवलं भौतिकज्ञानप्रदानम् अपर्याप्तम् यद्यपि विविधकौशलानाम् अन्वेषण- बहिरानयन-परिपोषणादि विविधाः क्रियाः पाठ्येतराः सन्ति, तथापि सर्वविधक्रियाकलापानाम् आधारः मूल्ययुक्तः स्यात् । मूल्यशिक्षा सा एव उच्यते यया मानवाः यत्किमपि मूल्यं प्राप्तुमर्हन्ति । तत्रैव संस्कृतपाठनस्य प्राधान्यमस्ति । यतोऽहि संस्कृतं स्वयमेव मूल्ययुक्तम् । शताब्दानां वैदेशिकाक्रमणपरम्परायां भारतस्य संस्कृतेः संस्कृतभाषायाः च प्राधान्यं न्यूनं जातम् । स्वतन्त्रतायाः अनन्तरं तु शिक्षाक्षेत्रे संस्कृतस्य पर्याप्तं स्थानं न दत्तम् । मूल्यशिक्षायाः अपि प्राधान्यं नास्तीत्यतः जनाः स्वार्थाः भूत्वा स्वकीयसुखलाभार्थं यत्किमपि कर्तुं सिद्धाः सन्ति । यदि संस्कृतं केवलं भाषारूपेण वा अपठिष्यत् तर्हि अवस्थेऽयं न अभविष्यत् | समूहे एवं मूल्यच्युतिः नैव भवति स्म । गुणयुक्तानां व्यक्तीनां द्वारैव गुणयुक्तः समूहः भवति | अतः देशस्य सुनागरिकाणां सर्जनाय शिक्षायाः गुणवत्ता वर्धनीया ।

" संस्क्रियते अनेन इति संस्कृतम्" इति व्युत्पत्त्या एवं सिद्ध्यति यत् भाषेयं मानवं संस्कारयुक्तं करोति कश्चन संस्कारः स्वतः सिद्ध्यति इति, भाषया अनया विज्ञानस्य भण्डारः लोकस्य पुरतः उपस्थापितः विविधशास्त्र - साहित्य-कलाभिः समृद्धया अनया विलिखितानां नानाशास्त्राणां पुराणेतिहासोपनिषदाद्यानाम् अध्ययनेन भौतिक-बौद्धिक-आध्यात्मिक-मौलिकाभिवृद्धिः जायते । बाल्यादेव एकस्मै संस्कृतं पाठ्यते चेत् अवश्यं समीचीनव्यक्तित्वस्य पात्रं भवति |

पञ्चतन्त्रादि कथाः काव्यानि, नाटकानि च कथं गृहे, समूहे देशे एवं विविधसन्दर्भेषु कथं व्यवहर्तव्यमिति आरभ्य सर्वस्मिन् विषये ज्ञानं प्रददाति । एतादृशं मूल्यज्ञानं प्राप्नुमः इति अज्ञात्वा एव सहजतया प्राप्नुवन्ति । संस्कृतभाषायां विद्यमानानि सुभाषितानि तु अतिविशिष्टानि सन्ति । तानि अतिसरलैः शब्दः अतिगहनं विज्ञानं प्रददाति तदपि सामान्योदाहरणैः । यथा -

**महाजनस्य संसर्गः कस्य नोन्नतिकारकः ।**

**पद्मपत्रस्थितं तोयं धत्ते मुक्ताफलश्रियम् ।।**

लघुकथाभिः सारोपदेशं प्राप्य छात्राणां मानसिक-व्यावहारिकपरिवर्तनं भवति, करुणा, साहोदर्यं, सामाजिकता, दया, सहानुभूतिः इत्यादि मूल्यानि सहजतया ते प्राप्नुवन्ति | गीतायाः सम्यगधिगमेन जीवने स्वीयसमस्यानां परिहारं स्वयं कर्तुं शक्ताः भवन्ति । भासकालिदासादिकवीनां काव्याध्ययनेन आस्वादनं, सहृदयत्वं बौद्धिकविकासश्च जायते | वाल्मीकिः, व्यासः, पतञ्जलिः शङ्कराचार्यः इत्येतेषां परमाचार्याणां परिचयदानेन तेषामुक्तीनां पाठनेन च संस्कृतशिक्षकः छात्रमेकं जीवनस्य परमलक्ष्यप्राप्त्यर्थमपि मार्गदर्शनं करोति|

**निष्कर्षः** –

भाषेयम् अस्माकं राष्ट्रस्य भाषा, विश्वस्य भाषा | कस्यापि समुदायस्य समूहस्य वा नास्ति | संस्कृते एव उक्तयः यथा " वसुधैव कुटुम्बकम्" "आनो भद्राः क्रतवो यन्तु विश्वतः " " सह ना ववतु", " सर्वे भवन्तु सुखिनः", लोकाः समस्ताः सुखिनो भवन्तु । अतः विश्वकल्याणनिमित्तं संस्कृतशिक्षायाः प्राधान्यं ज्ञात्वा सर्वकारविद्यालयाभिभावकानाञ्च पक्षतः पर्याप्तपरिश्रमेण संस्कृतप्रचारणं प्रसारणञ्च साधनीयमेव |



## SANSKRIT EDUCATION THROUGH SOCIAL MEDIA

**Abhijith M.K.,**
SS -I, Roll No. - 41

Social Media are the websites and applications that enable users to create and share content or to participate in social networking. Social media has gained much credibility over the years as a reliable source of information and platform where organizations can interact with audiences.

Nowadays, especially in this time of Covid-19 pandemic and related lockdown, we can see educational institutions adapting these developments into their systems and relying on group resources and mechanisms to improve student life. The use of Social Media in education helps students, teachers and parents to get more useful information, to connect with learning groups and other educational systems that make education convenient.

**SANSKRIT EDUCATION THROUGH SOCIAL MEDIA.**

Social network tools afford students and institutions with multiple opportunities to improve learning methods.

learn Sanskrit while reading memes. They also give chance to their followers to express their own Sanskrit memes and ideas in the group.

https://www.facebook.com/sanskritmemepage/?ti=as

In this golden era of information technology, we can reach out to any information just with a touch. In this same manner any information or content can also be reached to us; the algorithms are made in that way. So, the education of not only Sanskrit but also other subjects can be done through online media. Here the Social Media platforms, some of which are explained earlier, do a great job. By the help of them, Sanskrit educators can create and transmit content and the audience can receive it.

**REFERENCES**

Alfarid Hussain S M and Chanda Neelatphal (2017)
Integrating classical language to modern media platforms:
A multimodal approach towards mainstreaming Sanskrit.
International journal of social sciences and management vol. 4, issue 1: 5-8



## शैक्षिकक्षेत्रे एकाग्रता

**Devi Krishna,**
SS -I, Roll No. – 11

प्रपञ्चेऽस्मिन् अतिविचित्रं निगूढतमं च वर्तते मानवचित्तम् । प्रकाशादपि वेगेन सर्वत्र विहरति अस्माकं मनः। तादृशस्य मनसः कुत्रचित् एकत्र दृढरूपेण केन्द्रीकरणम् **एकाग्रता** इत्युच्यते। एकाग्रतया एव अस्माकम् अन्तः विद्यमानज्ञानस्य बहिस्फुरणं सम्भवति । सूक्ष्मातिसूक्ष्मविचाराणामपि ज्ञानं ऋषिमुनिभिः प्राप्तम् । पुरा अस्माकं श्रुतिपरम्परा आसीत् । तत्र केवलं श्रवणेनैव ज्ञानस्य सञ्चरणं भवति स्म, न पठनेन न वा लेखनेन । यद्यपि यत्किमपि कार्यं कर्तुम् एकाग्रता आवश्यकी, तथापि शैक्षिकक्षेत्रे नितराम् एकाग्रताया आवश्यकता वर्तते । अस्माकं स्मृतिग्रन्थेषु प्रसिद्धा सर्वजनग्राह्या च वर्तते श्रीमद्भगवद्गीता । तत्र एकाग्रतायाः महत्त्वं किम्? अभ्यासः कथम्? शैक्षिकक्षेत्रे तस्य अनुशीलनम् उत्तमरूपेण कथम् अस्माभिः कर्तुं शक्यते? इत्येवं विस्तरेण प्रपञ्चितम् ।

मर्कटवत् सदा चञ्चल्यमानस्य मनसः नियन्त्रणं छात्रैः सुतरां करणीयम् [1]। अन्यथा यथाविधि विषयं बुद्धौ स्थापयितुम् असमर्थाः भवन्ति । इदं वायोः निरोध इव, अत्यन्तं दुष्करं कार्यं चेदपि अध्ययने तस्य महती

आवश्यकता वर्तते। यथा दीपः वातरहिते क्षेत्रे स्थिरं तिष्ठति तथा छात्राणां मनः अपि एकस्मिन् विषये केन्द्रीकृतो भवेत्[2]। तदभावे तस्य बुद्धेः विकासो न भवति, कूपमण्डूकवत् तस्य जीवनं निरर्थकं भवति।

एवं सर्वत्र छात्राः एकाग्रतायाः विषये बहुधा विचारयन्ति। किन्तु अध्यापकानाम् एकाग्रतापि तावत् प्राधान्यम् आवहति यावत् छात्राणाम्। यथोक्तम्-

**“सङ्कल्पप्रभवान् कामांस्त्यक्त्वा सर्वानशेषतः।**
**मनसैवेन्द्रियग्रामं विनियम्य समन्ततः ॥ (भ.गी.६.२४)”**

अध्यापकैः विभिन्नेभ्यः वातावरणेभ्य अनुभूयमानाः विकाराः अत्र कामशब्देन गृहीतुं शक्यन्ते। तादृशान् विकारान् सर्वानपि निरुध्य अध्यापकाः कक्ष्यार्थम् आगच्छेयुः। ते पाठ्यमाने विषये छात्राणाम् अधिगमे च श्रद्धालवः भवेयुः, तत्रैव चित्तस्य विनियमनं कुर्युः। प्रस्तुतविषये मनसः केन्द्रीकरणाभावे विषयप्रवाहस्य स्थगनं जायेत, अप्रसक्तेषु विषयेषु गतिः स्यात्, एवं पाठस्य अग्रेगमनं दुष्करं भवति। अतः अध्यापकोऽपि एकाग्रचित्तः भवेत्। यथा छात्राः कक्ष्यायां मध्याह्नभोजने किमस्ति, घण्टानादः कदा भवति इत्येवं नैकान् विषयान् चिन्तयन्ति तथैव केचन अध्यापकाः अपि अन्यकार्येषु व्यस्ताः नानाविषयेषु चिन्तामग्नाः च भवन्ति, तेन छात्राणां मानसिकस्थितेः अवगमने क्लेशम् अनुभवन्ति ते अध्यापकाः। अतः अध्यापकेषु एकाग्रता छात्रापेक्षया अधिकतया भवेत्। यथोक्तं भगवता –

**“युञ्जन्नेवं सदात्मानं योगी विगतकल्मषः।**
**सुखेन ब्रह्मसंस्पर्शमत्यन्तं सुखमश्नुते ॥ (भ.गी.६.२८)”**

कामादीन् दूरीकृत्य यः अध्यापकः एकाग्रतापुरस्सरं स्वविषये अग्रेसरति सः सुलभतया पाठयितुं दक्षो भवति, तस्य पाठं च यथावत् मनसि स्थापयितुं शक्नुवन्ति छात्राः, तेन उभावपि संतृप्तिं प्राप्नुतः।

यथा लोके सर्वं त्रिगुणमयं दृश्यते तथा आहारोऽपि सात्त्विकराजसतामसभेदेन त्रिधा विभक्तमस्ति। एतादृशस्य आहारस्यापि एकाग्रतया सह सम्बन्धोऽस्ति। शुद्धं मृदु च भोजनम् एकाग्रतावर्धने अत्यन्तं साहायकं भवति[3]। मनसि शरीरे च उत्साहः वर्धते, आनन्दञ्च अनुभवन्ति। तीक्ष्णमलिनादिभोजनेन निद्रा आयाति, उदरस्वास्थ्यं चानुभवति, तेन चित्तस्य एकाग्रता बाधते। अत अध्यापकाः छात्राश्च एकाग्रतायै सर्वदा सात्त्विकाहारशीलाः भवेयुः।

केवलम् उक्त्या चिन्तनेन वा एकाग्रता नायाति। तन्निमित्तं निरन्तरम् अभ्यासः करणीयः[4]। तदर्थं ध्यानं योगञ्च अवलम्बनीयम्।श्रीमद्भगवद्गीतायां षष्ठाध्याये एकादशादारभ्य चतुर्भिः श्लोकैः कथं ध्यानं कर्तव्यमिति भगवता प्रोक्तमस्ति। शुद्धे समतले देशे सुखासनो भूत्वा समग्रमपि शरीरं निश्चलं कृत्वा एकस्मिन् विषये चित्तस्य केन्द्रीकरणं कुर्यात्। एवं यः नैरन्तर्येण अभ्यासं करोति तस्य वशीभवति चित्तम्। तस्मात् अध्यापकेन स्वजीवने अस्य पालनं कृत्वा आदर्शो भूत्वा छात्रानपि मार्गेऽस्मिन् आनीयात्।

**Foot notes -**

1. चञ्चलं हि मनः कृष्णप्रमाथि बलवद्दृढम् ।
तस्याहं निग्रहं मन्ये वायोरिव सुदुष्करम् ॥ (भ.गी.6.34)
2. यथा दीपो निवातस्थो नेङ्गते सोपमा स्मृतो ।
योगिनो यतचित्तस्य युञ्जतो योगमात्मनः ॥ (भ.गी.6.19)
3. आयुः सत्वबलारोग्यसुखप्रीतिविवर्धलाः ।
रस्याः स्निग्धाः स्थिरा हृद्या आहाराः सात्विकप्रियाः ॥ (भ.गी.17.09)
4. असंशयं महाबाहो मनो दुर्निग्रहं चलम् ।
आभ्योसेन तु कौन्तेय वैराग्येण च गृह्यते ॥ (भ.गी.6.35 )



## भाषाशिक्षा

**Silpa O. K.,**
SS - I, Roll No. – 44

**भाष्** व्यक्तायां वाचि इति धातोः निष्पन्नस्य भाषाशब्दस्य "भाष्यते अनया इति भाषा" इति व्युत्पत्तिः प्रसिद्धा। भाषायाः परिभाषा एवम् वक्तुं शक्यते । भाषा काचित् यादृश्चिक-वाचिक-ध्वनिसङ्केतात्मिकी पद्धतिः यया मानवः स्वविचाराणां परस्परं विनिमयं कुर्वन्ति। छात्राणां कृते विद्यमानान्तर्निहितशक्तीनां बहिरानयनम् एव शिक्षा इत्युच्यते । भाषा मानवजीवनस्य कृते अत्यावश्यकम् उपकरणमस्ति । तस्या अभावे मानवजीवने विकासस्य प्रक्रिया नैव पूर्यते। मानवाः इमां भाषां स्वसमाजात् जानन्ति। समाजाभावे भाषां ज्ञातुं न शक्यते। अस्माकम् आशयविनिमयार्थं भावप्रकटनाय च भाषाम् उपयुज्यते। पशुपक्षिणः अपि स्वविचारान् तेषां भाषासु प्रकटयन्ति। अस्माकं भारतदेशे द्वाविंशतिभाषाः प्रमुखाः सन्ति। एवं सर्वासु भाषासु जननी रूपेण संस्कृतभाषा अपि वर्तते। तत्र सर्वाः भाषाः वयं न जानीमः। किन्तु अस्माकं मातृभाषां सम्यक् रीत्या जानीमः। परन्तु अस्माकं राष्ट्रभाषा हिन्दी इति कारणेन हिन्दी भाषायाः ज्ञानम् अस्माकं जीवने अवश्यम् भवति। एवं संस्कृतभाषा, सर्वासु भाषासु जननी इति कारणेन तस्याः ज्ञानम् अपि प्राप्तव्यम्। एवं रूपेण आङ्ग्लभाषायाः अवगमनम् अपि अस्माकं जीवने उपकाराय भवति । किन्तु एतासु भाषासु अवगमनं विद्यालये शिक्षणेन एव संभवति । अतः भाषा शिक्षायाः आवश्यकता अथवा महत्त्वम् अस्माकं जीवने अत्यन्तापेक्षितम् भवति।

भाषायाः शिक्षणं नाम श्रवण-भाषण-पठन-लेखनाख्येषु चतुर्ष्वपि कौशलेषु दक्षताप्राप्तिः एवेति । एषा दक्षता प्राप्ता चेदेव कश्चन भाषाः स्वाधीनं कृतवान् इत्यर्थः । भाषायाः अध्ययनं स्वाभाविकीप्रवृत्तिः भवति । शिशूनां कृते भाषाध्ययनस्य अभ्यासः क्रियते । तादृशम् एव बाल्यकालात् आरभ्य अन्यभाषासु अभ्यासः क्रियते चेत् प्रयासेन विना भाषामधीयते । किन्तु सर्वा अन्यभाषाः विद्यालये एव पाठयन्ति । विद्यालये भाषाशिक्षा सम्यक् रूपेण न प्रचलति । भाषायाः अवगमनार्थं कानिचन नियमाः सन्ति । तत्र चत्वारि भाषा कौशलानि वर्तन्ते। तदनुसृत्य शिक्षकेण पाठयति चेत् भाषा सम्यक् रीत्या सरलतया अवगन्तुं शक्यते । तथा श्रवण-भाषण-पठन-लेखनादि कौशलानि चत्वारि भवन्ति । एषु कौशलेषु भाषायाः ग्रहणं प्रायः श्रवणेन एव भवति । स्वाभाविकभाषाधिगमप्रक्रियायाः प्रथमं सोपानम् भवति श्रवणम् । श्रोत्रेन्द्रियद्वारा अस्माभिः यत् शब्दतरङ्गाणां ग्रहणं क्रियते तदेव श्रवणं इत्युच्यते । भाषायाः सम्यक् श्रवणम् अस्ति चेत् समीचीनतया वक्तुं शक्यते । व्याकरणसंबन्धदोषः न जानाति चेत् अपि दोषेण विना वक्तुं शक्यते । यां कामपि भाषां पठितुम् इच्छति चेत् तत् भाषायाः निरन्तरश्रवणम् एव आदौ सम्पादनीयम् । द्वितीयं भवति भाषणम् । निरन्तरश्रवणस्य अनन्तरं किञ्चित् भाषणं कर्तुम् आरभ्यते । भाषणेन आत्मविश्वासः आगच्छति । दोषाः आगच्छन्ति चेदपि वक्तुं प्रयासं कुर्वन्ति । भाषणेन दीर्घकालं यावत् छात्राः स्पष्टरूपेण दोषरहितेन उच्चारणशुद्धतया च वक्तुं शक्नुवन्ति । अनन्तरं भवति पठनम् । पठनं वाचनं वा साक्षरतायाः शिक्षायाश्च पर्यायः इति मन्यते । पठनं नाम शब्दस्य अर्थग्रहणपूर्वकं स्पष्टं वाचनम् इत्यर्थः। पठनं नाम लिखिताक्षराणां भाषणरूपं भवति । पठनेन अधिकज्ञानं समुपार्जयितुं शक्यते । पठनेन छात्राणां उच्चारणं शुद्धं भवति । अन्तिमं भवति लेखनस्य अभ्यासः । स्वाभिलषितस्य अभिप्रायस्य विचारस्य वा प्रकाशनाय लिपिम् आश्रित्य क्रियमाणाक्षरविन्यासः एव लेखनम् । लेखनसमये सम्भाव्यमानदोषाणां निवारणम् अत्र क्रियते । एवं प्रकारेण भाषायाः अध्ययने कौशलानि सन्ति । “प्रत्यक्षविधि” इति वदति । SpokenEnglish, संस्कृतशिबिरम् इत्यादि कक्षासु प्रत्यक्षविधीनां कौशलानुसारम् एव पाठ्यते । किन्तु अस्माकं विद्यालये भाषायाः अध्ययनं एतादृशरीत्या न प्रचलति । तत्र आदौ लेखनमेव क्रियते । विपरीतरूपेण पाठयति अध्यापकः । विद्यालये अध्यापकाः भाषायाः अध्ययनं मातृभाषामाध्यमेन विषयरूपेण च पाठयन्ति । अतः छात्राः कदापि भाषायाः ज्ञानं न सम्पादयन्ति । अतः सर्वे विद्यालये भाषायाः अध्ययनं प्रत्यक्षविधिरूपेण कौशलाननुसृत्य ,यां भाषां पाठयति, सा भाषा माध्यमेन च पाठनीया । यथा वयं मातृभाषाणाम् अभ्यासं कुर्मः तथा अन्यभाषायाः अभ्यासोऽपि करणीयः ।



# मूल्यशिक्षा

**Aparna. K.V.,**
SS -I, Roll no. – 29

भारतीयविज्ञानं वेदेषु, भारतीयशास्त्रेषु, रामायणमहाभारतादि इतिहासेषु च सर्वेषु ग्रन्थेषु च पदं-पदं दुर्गोचरी भवति। यदा नैतिकशिक्षा,धार्मिकशिक्षा एवम् उत्तमोत्तरूपेण विचाराः तत्र कृताः वर्तन्ते। एतान् सर्वान् विषयान् आदाय एव अस्माकं शिक्षाप्रणाली प्रवर्ततेऽति विचारः क्रियते चेत्, कालोऽयं वर्तते भ्रष्टाचारकालः। समाजे सर्वत्र अहिंसाप्रवृत्तिः दृश्यते। भेदभावना, द्वेषभावना, ईर्ष्या राज्यादिषु सर्वत्राऽपि वैषम्यं वर्तते। एतत् सर्वमादाय किमर्थम् एवं प्रचलति? मूलकारणं किमस्ति? कुत्र परिवर्तनेन वयं पुनः समार्गं प्राप्नुमः? इत्युक्ते मूलकारणम् अथवा मूलस्थानं वर्तते शिक्षा। शिक्षया सर्वं साधयितुं शक्नुवन्ति। शिक्षया वयं सर्वं प्राप्तुं शक्नुमः। ”१८३६तमे वर्षे लोर्ट् मेक्काले(Lord Michael)”इति पाश्चात्यविद्वान् आभारतम् अटित्वा निरूपितवान्, घोषितवान् च यत् भारतीयदेशः समुन्नतः देशः, देशेऽस्मिन् शिक्षा समीचीना वर्तते। सर्वेऽपि अत्र शिक्षिताः सन्ति। अतः उक्तं यस्मिन् देशे शिक्षा उत्तमा उत्कृष्टा वर्तते तस्य देशस्य रक्षा स्वतः संभवतिती। सर्वं मिलित्वा चिन्त्यते चेत् शिक्षायां मूल्यानि नष्टानि। नैतिकता नष्टा। पाश्चात्यशिक्षानुगुणं यः विचारः आसीत् भारतीयपरम्परायां विध्यमानानि मूल्यानि किञ्चित् दूरीकर्तव्यानि इति , तथा प्रभृति गुरुशिष्यसम्बन्धः,माता-पितृ सम्बन्धः एवं शिक्षया प्राप्य उच्चविचारस्थावत् दूरंगताः। तर्हि पाश्चात्यशिक्षाप्रणाल्या किं वा प्राप्तम्? पाश्चात्यशिक्षाप्रणाल्य 3W एव प्राप्यतेति शिक्षाविदः। 3W इत्युक्ते अर्थात् Wealth,Wine,Women इत्यर्थः। भारतीयशिक्षाप्रणाल्या 3M वयं प्राप्नुमः। 3M इत्युक्ते अर्थात् मूल्यम् , मालसिकदृढत्वं, मोक्षः चेति इत्यर्थः। तर्हि पाश्चात्याः शिक्षां प्राप्नुवन्ति धनसम्पादनार्थम्, अनन्तरं सुरापानाय, स्त्रीसम्भोगार्थं च। अर्थात् ऐच्छिकसुखेषु एव तेषां शिक्षा प्रवृत्ता भवति। भारतीयशिक्षाप्रणाली अथवा शिक्षापरम्परा या वर्तते अस्माकं कृते 3M ददाति। अर्थात् अविद्यया मृत्युं तीर्त्वा विद्यया सुखमाप्नोति इति तृतीयः भवति मुमुक्षत्वम् अथवा मोक्षप्राप्तिः इति। तत्र आदौ एव प्राथमिकस्तरे मूल्यानि देयानि। तेन सः अग्रे जीवने विकासं प्राप्य मूल्यपरिरक्षणाय सङ्घराष्ट्रपरिवर्तनाय च प्रवर्तते। भारते विद्यमानानां छात्राणां कृते प्राथमिकशिक्षायामेव मूल्यानि देयानि। तानि च मूल्यानि परिवारात् आयान्ति,परिवारे बालाः शिक्षन्ते। शिक्षया तानि मूल्यानि प्राप्नुवन्ति। विद्यालये पाठ्यक्रमे पाठ्यचर्यायां च अमी विषयाः उल्लेखनीयाः। पाठ्यक्रमे एव एते विषयाः सन्ति चेत् एतान् सर्वान् पठित्वा सः अग्रे गन्तुमर्हति। अतः मूल्यशिक्षा आवश्यकी वर्तते। विना मूल्यं छात्राः यन्त्रवत् भवेयुः।



# साम्प्रतिकसमाजे गुरुकुलप्रथायाः आवश्यकता

**स्मृति रंजन बेहेरा,**
SS -I, Roll No. – 40

**भूमिका -**

शिक्षा आजीवनं प्रचाल्यमाना काचित् गतिशीला प्रक्रियास्ति ।"Education is a continuous process " । शिक्षादीप्तिः सर्वत्रैव प्रसरति । शिक्षादीप्त्या दीप्तिमान् भूत्वा मानवः सर्वविधाम् उन्नतिं कर्तुं सक्षमः भवति । उक्तञ्च-

**एतद्देशप्रसूतस्य सकाशादग्रजन्मनः ।**
**स्वं स्वं चरित्रं शिक्षेरन् पृथिव्याः सर्वमानवाः ॥ (मनु.१.१०)**

शिक्षाव्यवस्थायां प्रमुखकेन्द्ररूपेण विद्यालयः स्वीक्रियते । यत्र अध्ययनाध्यापनादिकं कार्यं निरन्तरं प्रचलति, तत् स्थानं विद्यालयः इति कथ्यते । विद्यायाः आलय इति कथ्यते । विद्या आलय इति पदद्वयस्य समाहारेण विद्यालयशब्दस्य निष्पतिः सञ्जायते । विद्यालयः भवति सरस्वत्याः निलयः । यत्र विद्यायाः अधिष्ठात्री देवी निवसति । समाजस्य दर्पणमिव विद्यालयः भाति 'School is the mirror of the Society". विद्यालयमाध्यमेन एव समाजस्य प्रतिबिम्बं द्रष्टुम् अस्माभिः शक्यते । विद्यालये प्रमुखभूमिकां निर्वहति शिक्षकः। शिक्षकस्य तत्त्वावधानेन एव सर्वविधकार्यं सम्पादितं भवति । शिक्षक इति शब्दस्य कृते आचार्यः उपाध्यायः गुरु इत्यादि शब्दाः व्यवह्रियन्ते । गुरु इत्युक्ते 'गु' शब्दस्य अर्थः भवति अज्ञानरूपकं तमः विनाश्य ज्ञानज्योतिः प्रसारयति सः गुरुपदवाच्यः । उक्तञ्च मनुस्मृतौ मनुना-

**"उपाध्यायात् दशाचार्यः" (चक्रवाक्)**

इदानीं तु विद्यालयव्यवस्था प्रचलति । एतत् तु आधुनिकी एव । विद्यालयात् प्रागेव गुरुकुलप्रथा प्रचलिताऽसीत् । प्राचीनभारते गुरुकुलपरम्परा १. असतो मा सद्गमय २. तमसो मा ज्योतिर्गमय ३. मृत्योर्मा अमृतं गमय इति त्रीणि उद्देश्यानि नीत्वा निर्मिता आसीत् । परन्तुकालान्तरे एतस्य उद्देशस्य परिवर्तितम् ।

**गुरुकुलप्रथा -**

वैदिककाले वेदाभ्यासे अभ्यासः, जपः, शिष्येभ्यो वेदानां दानञ्चेत्यादीनां समावेशो भवति स्म । एवं प्रकारेण वेदाभ्यासेन एव तद्युगस्य शिक्षणविधेः बोधो भवति । वैदिककालिन्याः शिक्षायाः अवलोकनेन ज्ञायते यत् केचन शिक्षाविधयः तदानीं प्रचलिताः आसन् । एतेषु अधीतिः , बोधः ,आचरणं , प्रसारणञ्चेति प्रमुखाः विधयः सन्ति । पाश्चात्यशिक्षापद्धतीनाम् आगमनात् परं शिक्षाक्षेत्रे बहवः विधयः दरीदृश्यन्ते । अत्र केचन विधयः चर्च्यन्ते-

**पाठशालाविधिः -**

अयं विधिः प्राचीनतमः विधिरस्ति । परम्पराश्रयणाद् अयं पारम्परिकविधिरित्युच्यते । पण्डितानां निर्माणायपण्डितैरादृतत्वात् पण्डितप्रणाली इति चैषा कथ्यते । सप्तदशशताब्धिपर्यन्तं पाठशालासु, आश्रमेषु, गुरुकुलेषु, मठेषु, विद्यापीठेषु च अयं शिक्षाविधिः प्रचलितः आसीत् । अनेन विधिना शिक्षारम्भः उपनयनसंस्कारात्परं भवति स्म । गुरुः छात्रेभ्यो गायत्रीमन्त्रम् उपदिशति । मन्त्रस्य दीक्षायाः परं शिक्षा प्रारभ्यते ।

अध्ययनार्थं गुरोः आह्वानस्य व्यवस्था आसीत् । प्रतिदिनं शिष्यः नित्यकर्म कृत्वा गुरोः समीपं गच्छति । पाठारम्भाय छात्रः स्वदक्षिणहस्तेन गुरोः वामहस्तं धृत्वा निवेदयति स्म यत् "सम्माननीयाः श्रावयन्तुः" इति । छात्रः दत्तचित्तो भूत्वा ओमिति शब्दमुच्चारयति स्म ।

वैदिककालिका प्राचीनतमा शिक्षणसंस्था ऋषीणां ग्रामेषु आसीत् । तस्मिन् काले केचन आचार्याः शिष्यैः सह नैकदेशेषु परिभ्रमन्तः स्वज्ञानं वितरन्ति स्म । तदानीं चतुर्वर्गेषु धमार्थकाममोक्षेषु चतुर्थस्य प्राप्तिरेव शिक्षायाः प्रमुखमुद्देश्यमासीत् । विधिरयं शिक्षणस्य स्थाने मानवस्य जीवनशैल्यां विशिष्टं बलं ददाति स्म । तस्मिन् काले गुरुशिष्यसम्बन्धः पितापुत्रवत् आसीत् । शिक्षकाः शिष्याणामादरभाजः भवन्ति स्म । ते तु मातृपितृसमाः शिष्याणां कृते आसन् ।

**साम्प्रतिकसमाजेगुरुकुलप्रथा -**

इदानीं समाजः प्रगतिपथे गच्छति । शिक्षाक्षेत्रे अपि महत् परिवर्त्तनं जातम् । भारतवर्षस्य बहुषु प्रान्तेषु मुक्तस्वाध्यायकेन्द्रम्, दूरस्थशिक्षा, विद्यालयशिक्षा, महाविद्यालयशिक्षा, विश्वविद्यालयशिक्षाकेन्द्राणि च उद्घाटितानि । तत्र आधुनिकपद्धत्या यद्यपि अन्तर्जालादिमाध्यमेन पठनपाठनादिकं कार्यं प्रचलति परन्तु पारम्परिकरीत्या अपि पठनपाठनादिकं कार्यं प्रचलति । पुरातनकाले गुरोः समीपे छात्रः उपविश्य अध्ययनकार्यं करोति स्म, इदानीम् अपि विद्यालयेषु महाविद्यालयेषु विश्वविद्यालयेषु च तद्व्यवस्था प्रचलति । इदानीमपि छात्राणां ज्ञानवर्द्धनार्थं शिक्षायाः गुणात्मकमानवर्द्धनार्थं मौखिकाभिव्यक्तेः विकासार्थं शास्त्रार्थव्यवस्था प्रचलति। छात्राणां स्वीयप्रतिभायाः विकासार्थम् अखिलभारतीयशास्त्रीयस्पर्धामपि सर्वकारपक्षतः समायोज्यते, यद्वारा छात्राणां प्रतिभा अग्रे आगच्छति ।

गुरुकुलप्रथायां तस्मिन् समये शिक्षककेन्द्रितशिक्षणव्यवस्था प्रचलिता आसीत् । इदानीं यद्यपि शिक्षा छात्रकेन्द्रिता वर्तते । परन्तु कक्षाकक्षे अध्यापकस्य स्थानं सर्वाग्रे वर्त्तते । यतोहि Jahn dewy महोदयस्य अनुसारं- शिक्षा स्तम्भत्रयाधारिता । अर्थात् शिक्षकः छात्रः पाठ्यक्रमश्च त्रयमाधारीकृत्य एव शिक्षाव्यवस्था निरन्तरं प्रचलति । सर्वत्रैव पारम्परिकरीत्या कार्यं प्रचलति । वस्तुतः भूमण्डलेऽस्मिन् यदपि सत्यं शिवं सुन्दरमस्ति सर्वमेतत् विद्यया एव महनीयत्वं दृश्यते । विद्या मनुष्याय विनयं ददाति । विद्यया यशः प्राप्यते । विद्या सर्वेषां गुरुः अस्ति । प्रपञ्चे-लिप्सा-गर्व-प्रमाद-विलासादिनाशकं नाम ज्ञानविद्या । अनया एव विद्यया स्वात्मपरिष्कारः, लोककल्याणं, मोक्षप्राप्तिश्च भवति । शिक्षामाध्यमेन छात्राणां नैतिक-आध्यात्मिकज्ञानवर्धनाय चरित्रनिर्माणाय च गुरुकुलप्रथायाः आवश्यकता नितरां विद्यते । एवं भवति साम्प्रतिकसमाजे गुरुकुलप्रथायाः आवश्यकता ।



# हिन्दूधर्मप्रेरिताः विश्वविख्याताः विज्ञानिनः

**गायत्री परिडा,**
SS -I, Roll No. – 24

अध्यात्मं विज्ञानं चतादृशौ शब्दौ यौ सामान्यतया सहगामिनौ न। द्वयोः अपि मार्गौ पृथक् पृथक्। तत्तन्मार्गगामिनः जनान् दूषयन्ति इति सार्वत्रिकं चित्रम्। 'धर्म ' इति सङ्कल्पना बहूनां दृष्टया अतर्क्या चेदपि हिन्दुधर्मगताः नैके विषयाः वैज्ञानिकानि प्रमाणानि आवहन्ति यत् तत् बहूनां वैज्ञानिकानाम् अवधानम् आकर्षितवत् । अवधानाकर्षणमात्रं न , वैश्विकस्तरे प्रसिद्धाः प्रभाववन्तः ये बहवः वैज्ञानिकाः हिन्दूधर्मात्तत्सूक्तिभ्यः च प्रभाविताः सन्ति। ऐन्स्टैन् प्रभृतिभिः विज्ञानिभिः अपि प्रभावः प्राप्तः आसीत् इति वयं जानीमः एव । किन्तु आधुनिकाः वैज्ञानिकाः अपि हिन्दुधर्मप्रभावम् अङ्गीकुर्वाणाः दृश्यन्तेइतितुमोदस्यविषयः।तेषुकेषाञ्चित्प्रसिद्धानांविषयेअवलोकयाम।

**इर्विन्श्रोटिज्जरः** – १९३३ तमे वर्षे नोबेल्प्रशस्त्या पुरस्कृतः अयं विज्ञानी । तदीयेषु लेखनेषु हिन्दुधर्मस्य प्रभावः इत्यस्मिन्विषये बहुधा लिखितवान् दृश्यते My view of world इति पुस्तके। तद्यथा - यद्यपि एत द्ब्रह्माण्डं समूहवत् अस्ति , यस्य युगपत्दर्शनं नकेनापि कर्तुं शक्यं , तस्य एव भागभूतम् अस्ति अस्मदादीनां जीवनम्। वैदिकाः एतं विषयं सरलतया विवृतवन्तः 'तत्त्वम् असि ' इति एकेन एव वाक्येन। आत्मतत्त्वविषये ब्रह्मतत्त्वविषये वा उपनिषदः वदन्ति । तत्र अपि स्वान्तस्थस्यब्रह्मतत्त्वस्य सर्वव्यापिनः ब्रह्मतत्त्वस्य च एकत्वं यत्प्रतिपादितं ततः स्वान्तरङ्गे विद्यमानः आनन्दः एव सकलजगतः आनन्दः इति तदवगतवतस्य भवति। वेदान्तम् उच्चारयन्तः , जिह्वाग्रे धरन्तः , बुद्धौ स्थापयन्तः च स्वाचारे अपि तस्य आनयनं यत्ते कुर्वन्ति तत्तु अत्यन्तं श्रेष्ठम्। गणरूपेण बहवः सन्तः वयं स्वीयं वास्तविकं ज्ञानं स्वरूपं च प्राप्तुं नैव शक्नुमः। बहुत्त्वं क्षणिकम्। स्वस्य अन्तरङ्गे एव समाधानं प्राप्तुं शक्यं सर्वेण अपि। उपनिषदां प्रकाशे इदं तत्त्वं मया अवगतम्। इतः नितरां प्रभावितः अस्मि अहम्। मम कल्पनाः सिद्धान्ताः च नूनंवेदान्ततत्त्वेन प्रेरिताः सन्ति।

वेर्नेरहेसन्बर्गः – क्वाण्टम् मेकेनिक्स् इति क्षेत्रे एतदीयं नाम नितरां प्रसिद्धम्। एतदीयः अनिश्चिततासिद्धान्तः अस्ति विश्वप्रसिद्धः । नोबेल्पुरस्कारेण पुरस्कृतः वेर्नेरवर्यः अपि हिन्दुधर्मतः एव क्वाण्टम्मेकेनिक्सतत्वानि अवगतवान् इति कथ्यते। सः कथयति स्म - ' वयं यावत् चिन्तयितुं शक्नुयाम ततोऽपि गूढम् अस्ति जगदिदम्। जगति विषयाणां गाम्भीर्यं तावत् अस्ति यत् वयं तद्विषये कांश्चन विनोदान् एव कर्तुं शक्नुयाम । अहोतस्य गाढता!' रवीन्द्रनाथटागोरेण सहजातायां च चर्यां सः अवदत् - " येषां परस्परसम्बद्धता, परस्परयुक्तता, अस्थिरता इत्यादीनां भौतिकविषयाणाम् अवगमने अहं महत्कष्टम् अनुभूतवान् , ते विचाराः भारतीयाध्यात्मिकपरम्परायाः सामान्याः मूलभूतविषयाः सन्ति " इति । टागोरवर्येण सहजातायाः सुदीर्घचर्चायाः कारणात् एव हेसन्बर्गेण नवाः कल्पनाः क्वाण्टम्सिद्धान्ते प्रतिपादिताः ' इति स्वीयम् अनुभवं श्रोटिज्जरवर्यः अपि तदीयेषु भाषणेषु उक्तवान् अस्ति। हेसन्बर्गः कथयति - 'याः कल्पनाः औन्नत्ययुक्ताः भासन्ते स्म , ताः एव वेदान्तं जानतां दृष्टया मम क्वाण्टम्सिद्धान्तः उपहासवस्तुत्वेन न भासेत। ते लीलया एतं विषयम् अवगच्छेयुः।'

**नील्स्बोहरः** –अयम् अपि नोबेल्पुरस्कारविजेता विज्ञानी । आणविकसंरचनाविषये सुमहत् योगदानं कृतवान् अस्ति अयम् । सः स्वाभिमानं कथयति - ' यदा मम मनसि प्रश्नाः भवन्ति तदा अहम् उपनिषदः शरणं गच्छामि इति । '

**कार्लसगनः** – आमेरिकादेशीयः ज्योतिष्कः अन्तरिक्षविज्ञानी , तत्वज्ञः च अयम् । अन्तरिक्षविज्ञाने विश्वप्रसिद्धः एषः हिन्दुधर्मावलम्बी आसीत् । सः वदति –हिन्दुधर्मः एकः एव आकाशगङ्गानां मृत्यून्पुनर्जन्मानि च अङ्गीकरोति । दैनिककालगणनामात्रं न , अपि तु ब्रह्मणः रात्रिदिनयोः गणना अपि । तन्नाम इतः कोट्य्धिकवर्षाणां गणना हिन्दुभिः ज्ञायते ।नृत्यदेवतायाः शिवस्य हस्ते विद्यमानः डमरुः उत्पत्तेः , दीपशिखालयस्य च प्रतीकम् । युरोपीयाः यत्र विश्वस्य वयः सहस्रं वर्षाणि इति कथयन्ति स्म , मया लक्षं वर्षाणि इति कथ्यते स्म, तदा एव हिन्दवः कोटिशः वर्षाणां कथनं सप्रमाणं कुर्वन्ति स्म ।

**निकोलाटेस्ला** – स्वयम् अयं जनः बहूनां विषयाणां संशोधनं कृतवान् । थामस एडिसनेन यावन्ति संशोधनानि कृतानि ततः अपि अधिकानि संशोधनानि टेस्लावर्येण कृतानि इत्यत्र उपलभ्यन्ते प्रमाणानि । सोऽयं सम्मान्यः वैज्ञानिकः अभियन्ता वेदान्तविषये एवम् अभिप्रैति – आकाशं पूरयत्प्रत्येकं तत्वं जीवदानप्राणेन सक्रियतां प्राप्नोति । सक्रियताप्रापणस्य एषा क्रिया नित्यं चक्रवत्प्रवर्तमाना एव भवति । सा नैव समाप्यते ।

एते विज्ञानिनः प्रसिद्धाः इत्यतः तेषां नामानि उद्धृतानि अत्र । तेषां कथनानि अपि विस्तरभयात् अल्पशः एव दत्तानि । वस्तुतः तु हिन्दुधर्मः इति नान्मा प्रसिद्धस्य विचारसागरस्य सर्वाणि तत्त्वानि विश्वे विद्यामानान्विचारतः बहून्जनान्प्रेरयन्तः सन्ति, अधुना अपि प्रेरयन्ति च । बहूनां वर्षाणाम् अनुभवप्राबल्यात्चिन्तनमन्थनादि प्रक्रियादिभिः , तदा तदा अङ्गीकृतैः परिवर्तनादिभिः च अत्यन्तं प्राचीनम् अपि ज्ञानम् इदम् अत्याधुनिकान् बहून्गूढांशान्सोदाहरणं सप्रमाणं च बोधयितुं पारयति । पौराणिकाः आधुनिकाः इत्यादीन् अनपेक्षितान् कृत्रिमभेदान्परित्यज्य ज्ञाननिधेः सार्वत्रिकान् ज्ञानांशान्चित्वा तेषां सदुपयोगः यथा स्यात् तथा प्रयासं कुर्युः । एषा अद्यतनी आवश्यकता । वेदान्तः , औपनिषदं कथनं वाविज्ञानात्पृथक् इति कथनं नूनम् अज्ञानजम् । वस्तुतः महत्त्वं प्राप्तुं प्रवृतौ उभौ अपि मार्गौ न भिन्नौ , अपि तु अभिन्नौ । तयोः सङ्गतिः परिकल्पनायैव । अतः धर्मशब्दस्य श्रवणमात्रेण पलायनं ये कुर्वन्ति तैः तदन्तिके विद्यमानाः शास्त्रसम्बद्धाः विषयाः यदि ज्ञायेरन्तर्हि तेऽपि पुनरपिज्ञानाब्धौ श्रद्धावन्तः नूनं भवेयुः । मान्यैः विज्ञानिभिः मानितम् अस्माकं विश्वमान्यज्ञानं साभिमानं तदवगमनाय सर्वान्प्रेरयेत् इति विश्वासः।



# शिक्षाक्षेत्रे योगशास्त्रस्य प्रभावः

**अयना मनोज्. एन् .के,**
SS -I, Roll No. -35

ऐतिहासिकरूपेण इदं कथनं सुतरां कठिनांशः वर्तते यत् साम्प्रतं भारते योगविद्यायाः आविर्भावः जातः इति । योगविद्यायाः आविर्भावविषये अनेकेषु ग्रन्थेषु यथाकालं प्रतिपादितं समुपलभ्यते अतः आबहोकालात् इयं विद्या प्रचलति । विद्येयं विश्वे सर्वप्राणिविशेषान् अनुपालितवती । शिक्षाक्षेत्रे अपि योगशास्त्रस्य प्रभावः वर्तते।

भारतीयदार्शनिकविचारधारायाः योगः सर्वत्र मुख्यावयवत्वेन अङ्गीक्रियते मन्यते च । वैदिकविचारधारयाः दृष्टौ यदि योगं पश्यामः तर्हि तदनेकेषु स्थलेषु स्पृष्टतया वर्णितं वर्तते । साम्प्रतिककाले योगस्य महती आवश्यकता दृश्यते । बहुशः जनाः छात्राः अपि रोगैः आक्रान्ताः सन्ति । योगमाध्यमेन एकत्र रोगाणां निवृतिः भवति, अपरत्र जीवने स्फूर्तिरपि जायते । अत्यन्तेऽस्मिन् व्यस्तकाले शारीरिकस्वास्थ्यरक्षणाय योगस्य महती आवश्यकता वरीवर्ति । तस्य मानसिकव्यधाः स्वयमेव व्यपगताः भवन्ति । सः न केवलं कार्येषु सक्रियत्वम् निर्वहति अपि तु नानाप्रकारकाणि नूतनानि रुचिपूर्णानि कार्याणि अपि साधयति । शारीरिकमानसिकसमस्यानां सर्वतोभावेन परिसमापनाय योगस्य महती आवश्यकतास्तीति ।

इदानीन्तनकाले शिक्षाक्षेत्रे छात्राणां शारीरिकमानसिकसमस्यानाम् निवारणार्थं योगस्य आवश्यकतास्ति ।

* छात्राणां शारीरिकशुद्धतार्थं योगः आवश्यकः ।
* रोगाणां परिसमापनाय योगः आवश्यकः ।
* शारीरिकसौष्ठवपरिरक्षणाय योगः आवश्यकः ।
* शरीरमृदुतायाः आनयनाय योगः आवश्यकः ।
* मानसिकस्थिरतायै योगः आवश्यकः ।
* अध्यात्मविकासाय योगः आवश्यकः ।
* नैतिकमूल्यानाम् वर्धनाय योगः आवश्यकः ।
* सहजतया आसनानां कौशलसम्पादनाय योगः आवश्यकः ।

अनेकप्रकारेण छात्राणां कृते योगस्यावश्यकता अस्ति इति ।

योगस्य साम्प्रतिके काले अनेके आयामाः विद्यन्ते, येषां माध्यमेन सर्वसमर्थतया छात्रः स्वीयं पूर्णाविकासं कर्तुं शक्नोति ।

तत्र शारीरिकमानसिकक्रियाः अपि आयामत्वेन परिगण्यन्ते एव छात्रैः अष्टाङ्गयोगस्य परिपालनम् आयामे एव करणीयं भवति ।

आयामाः प्राथमिकस्तरे चतुर्था अस्ति ।

* मानसिकायामः
* शारीरिकायामः
* आध्यात्मिकायामः
* सामाजिकायामः

योगः एतेषु चतुर्षु आयमेषु स्वीयां भूमिकां निर्वहति येन छात्राः स्वीयं विकासं साधयन्ति । मानसिकायामे मानसिकरूपेण योगः स्वास्थ्यरक्षणाय नूतनचिन्तनाय व्यवहारपरायणातां च वर्धयितुं सततं प्रयतते । एवञ्च शारीरिकायामे आसनप्राणायामे छात्रस्य शारीरिकदोषाणां पूर्णतया ध्वंसनं नाशो वा जायते । आध्यात्मिकायाः अस्याः शिक्षायाः कृते अपि योगः महत्त्वं धारयति, यतः योगद्वारा अध्यात्मिकविकासः जायते। आमतिपर्यन्तं मूलचक्राणां नियन्त्रणपर्यन्तं सार्गभीता विषयपरिपालनता च जीवने आयाति । योगः विज्ञानमस्ति । छात्राणां मनोशक्तिः हृदयाह्लादः आत्मबलं च प्राप्यते ।

अत्र शिक्षाक्षेत्रे शारिरिकशिक्षा अपि वर्तते । प्राचीनकालादेव भारते शारीरिकशिक्षायाः स्वरूपं स्पष्टं दृढं च आसीत् । आधुनिकयुगेऽपि शारीरिकशिक्षायाः नितराम् आवश्यकता दरीदृश्यते एव । यतः केचन शारीरिकशिक्षामेव महत्त्वपूर्णं मन्यन्ते । अत्र शारीरिकशिक्षा शिक्षाक्षेत्रे योगस्य आधारेण वर्तते ।

योगशास्त्रप्रभावानुगुणं योगः भारतस्य आधारः अस्ति । अतः योगं विना वयं स्वस्थाः सानन्दाः च भवितुम् न शक्नुमः । सर्वप्रथमं महर्षिपतञ्जलिः योगसूत्राणि प्रतिपादितवान् । अस्मिन् ग्रन्थे अष्टांग-योगस्य वर्णनम् अस्ति ।सम्प्रति महानगरेषु प्रदूषणस्य समस्या अस्ति । ध्वनिः, वायुः एवम् जलप्रदूषणं महानगरस्य जीवनस्य विकटसमस्यात्वेन परिगण्यन्ते । एकतापरिवारः महानगरस्य यथार्थः एतेन कारणेन जनाः रुग्णाः भविन्त। समयाभावेन जनेषु परस्परं प्रेमः स्नेहः च न अस्ति । वयं सर्वे तेनावग्रस्ताः भवामः ।

अत एव अस्माभिः सर्वैः नूनं योगः करणीयः । प्रतिदिनं प्रातः सायं योगाचार्यान्, योगग्रन्थान् च पूजयेत्।

केवलं योगेन वयं स्वस्थाः भविष्यामः, शारिरिकं मानसिकं च पुष्ठये योगः महत्त्वपूर्णः अस्ति । अतः छात्राणां कृते शिक्षाक्षेत्रे योगस्यावश्यकता अत्यन्तावश्यकमस्तीति विद्धिः प्रतिपादितमेव ।



# सङ्गणकमाध्यमेन शिक्षणम्

**उदितकुमारपण्डा** ,
SS -I, Roll No. – 25

आधुनिककाले यान्त्रिकीकरणस्य प्रभावः अवलोक्यते । यान्त्रिकीकरणक्षेत्रे सङ्गणकस्य विषेशभूमिका वर्तते । छात्राणां संख्यावृद्धिं दृष्ट्वा छत्रेषु उत्तमतया शिक्षणाधिगमपरिस्थितिम् उत्पाद्य ज्ञानस्य सञ्चारार्थं सङ्गणकं महत्त्वपूर्णसाधनम् अस्ति । पञ्चत्रिंशत् वर्षेभ्यः पूर्वं विद्यालयेषु , विश्वविद्यालयेषु सङ्गणकं नासीत् , अधुना तु गृहे गृहे संङ्गणकयन्त्रं विद्यते । मार्गे मार्गे सङ्गणकशिक्षणकेन्द्राणि विराजन्ते । चाल्स् बाबेजनामकः वैज्ञानिकः प्रथममाधुनिकसङ्गणकयन्त्रम् आविष्कृतवान् । अतः सः संगणकजनकः इति प्रसिद्धः अस्ति । सङ्गणकानि केवलं गणनयन्त्रत्वेन आरम्भकाले मन्यन्ते स्म । किन्तु अनन्तरम् अनुभूतं यत् गणनायाः अपेक्षया अन्यानि कार्याणि अपि अनेन साधयितुं शक्यन्ते इति । सङ्गणकेन अतिजटिलसमस्याः अपि साधयितुं शक्यते । अतः प्रत्येकं क्षेत्रे सङ्गणकस्य उपयोगः आरब्धः अस्ति ।

सङ्गणकेन पाठनसमये सर्वे छात्राः युगपत् उपविशन्ति । प्रत्येकं छात्रस्य साक्षात् सम्बन्धः सङ्गणकस्य श्रवणयन्त्रेण सह , ध्वनिमुद्रणयन्त्रेण सह , पिञ्जपट्टिकया सह भवति । सर्वादौ पाठ्यवस्तु लघुभिः अंशैः विभागं कृत्वा संगणके संस्थाप्यते । छात्राः पठित्वा अवगच्छन्ति । पुनः श्रवणयन्त्रसाहाय्येन प्रश्नाः पृच्छयन्ते , तदा कक्षायाः वातावरणं शान्तं भवति । प्रश्नानाम् उत्तराणि आम् वा न इति प्रकारेण लघुवाक्यैः वा दातुं शक्यन्ते । कक्षायाः शान्तवातावरणत्वात् छात्राणाम् अवधानं यवनिकायां , श्रवणयन्त्रे वा तिष्ठति , अनेन शिक्षणे सारल्यं भवति ।

यद्यपि सङ्गणकेन शिक्षणम् अत्यन्तं लाभदायकं भवति तथापि अधुना संङ्गणकस्य परिणामः अहितकरमार्गेण अपि प्रवर्तमानः दृश्यते । इदानीं तादृशी स्थितिः आगता दृश्यते यत् , यदि कश्चन सङ्गणकचालनं न जानाति तर्हि सः निरक्षरः परिगण्यते आधुनिक जनैः । विविधविषयाभ्यासिनः अपि नैकसहस्ररूप्यकाणि व्ययीकृत्य सङ्गणकज्ञानं प्राप्तुं यतमानाः अवलोक्यन्ते । अतः अधुनातनकाले ग्रन्थाध्ययनम् , काव्याभ्यासः , व्याकरणाभ्यासः, इत्यादिकं निरुपयोगिकार्याणीति सर्वे मन्यन्ते । सङ्गणकं मानवनिर्मितं किञ्चित् यन्त्रम् । तत् मानवस्य सेवकत्वं निर्वहेत् , न तु स्वामित्वम् ।

सम्प्रति सर्वेषु विकसितदेशेषु एतस्य मस्तिकयन्त्रस्य प्रभाविसाधनत्वेन उपयोगः क्रियमाणः वर्तते । सङ्गणकेन सह कार्यं कुर्वतः छात्रान् अवलोक्य अवगम्यते यत् कियता उत्साहेन ते कार्यक्रमं सम्पादयन्ति । अद्य NCTE, UGC, NCERT, CIET इत्यादिषु बहुविधसंस्थासु संङ्गणकशिक्षणं संङ्गणकेन शिक्षणम् इत्यादि बहुविधपरियोजना: समाश्रिताः सन्ति । एतेन शिक्षणं यद्यपि यांत्रिकशिक्षणम् इति बहवः अभिप्रयन्ति , तथापि अनेन अल्पीयसि काले बहुभ्यः छात्रेभ्यः चात्र स्तरानुगुणं प्रभाविरूपेण शिक्षणं प्रदातुं शक्यते ।



# शिक्षाक्षेत्रे दृश्यश्रव्योपकरणानि

**उन्निमाया,**
SS -I, Roll No. – 06

मनुष्यः सामाजिकप्राणी भवति।समाजे वसति, जीवति, इत्यतः सामाजिकगति-विधिना सह सम्बन्धं स्थापयितुं यत्नं करोति । सः सामाजिकपुरोगत्यै सर्वदा चिन्तयति । तदानीं सः शिक्षायाः साहाय्यं स्वीकरोति । किमर्थम् इत्युक्ते शिक्षायाः कार्यं मानवजीवननिर्माणार्थं राष्ट्रनिर्माणार्थं च भवति । शिक्षा नाम आजीवनं प्रचलन्ती काचित् गतिशीला प्रक्रिया भवति । व्यक्तिः जन्मतः मृत्युपर्यन्तं शिक्षते । व्यक्तिः परिवारे, समाजे, आपणे, विद्यालये , यात्रायां च क्रमशः शिक्षते ।

विद्यालये छात्राः शिक्षकस्य साहाय्येन शिक्षां प्राप्नुवन्ति । यः ज्ञानवान् भवति सः शिक्षकः भवितुं शक्नोति । किञ्च स्वेनाधिगतं ज्ञानमितरेभ्यो नैपुण्येन संक्रमायितुं शक्नोति, सः उत्तमशिक्षकः भवितुमर्हति । न केवलं ज्ञानार्जनम् अपि तु तत्प्रकटनमपि अध्यापकस्यावश्यकं लक्षणमस्ति । सर्वेषां शिक्षकाणाम् बोधनकौशलमावश्यकम् । एवं विषयान् सम्यक् बोधयितुं शिक्षकाः पाठनसन्दर्भे शिक्षणोपकरणानां प्रयोगं कुर्वन्ति । नूतनशिक्षणपद्धतिषु दृश्यश्रव्योपकरणानां कृते अत्यधिकं महत्त्वं समागतम् । दृश्यश्रव्योपकरणानां प्रयोगेण अध्ययनं प्रभवाशाली, रोचकञ्ज भवति । छात्राणां कृते पाठस्योपरि आसक्तिवर्धनाय बोधितपाठे बहुकालपर्यन्तं मनस्सु संस्थापनाय उपकरणानि आवश्कानि ।शिक्षकाः कक्षायाम् उपकरणानि उपयुज्य पाठनं कुर्वन्ति, किमर्थं इत्युक्ते, उपकरणानां प्रयोगेण पठन- पाठनसमये छात्राणां मनः बहिर्न गच्छति । उपकरणानां साहाय्येन स्वयमेव अर्थावबोधनं कर्तुं शक्यते । उपकरणानि उपयुज्य पाठ्यते चेत् छात्राणां कल्पनाशक्तेः विकासः भवति ।अदृष्टवस्तूनां पाठनं शक्यते।

दृष्यश्रव्योपकरणानि शिक्षणस्य साधनानि भवन्ति,न तु साध्यानि, एतदर्थं शिक्षणे एतेषां सदुपयोगः कर्तव्यः । अध्यापकः उपकरणानाम् उपयोगात्पूर्वं तेषां महत्त्वं ज्ञात्वा उद्देश्यानुसारं प्रयोगं कुर्यात् । शिक्षणाय अपेक्षितानि चित्राणि विविधपत्रेभ्यः,पत्रिकाभ्यश्च समाहरणीयानि । एतेषां प्रयोगस्य पूर्वयोजना रचनीया । पाठनवसरे आवश्यकतानुसारमेव उपकरणानां प्रयोगः कर्तव्यः । शिक्षणे दृष्यश्रव्योपकरणानां प्रयोगः लाभप्रदः भवति । अतः अवश्यम् एतेषां प्रयोगः शिक्षणे अनिवार्यरूपेण कर्तव्यः ।

**सन्दर्भग्रन्थसूची-**

- शिक्षायाः दार्शनिकाधारः – डा.सोमनाथ साहू
- संस्कृतशिक्षणम् - डा.सन्तोश मिट्टल्



# आधुनिकभारते संस्कृतशिक्षणस्य आवश्यकता

**दीप्तिरञ्जन् आचार्य,**
SS -I, Roll No. – 48

**भूमिका**–

आकुमारिहिमाचलपर्यन्तं विस्तृता अस्माकं भारतभूमिः । इयं भूमिः देवभूमिः इति सर्वे स्वीकुर्वन्ति । आसीत् पुरा राज्ञः दुष्यन्तस्य पुत्रो भरतो नाम चक्रवर्त्ती राजा । तेन शासितो देशः भारतवर्षम् इत्यभिधानं प्राप्तः। मत्स्यपुराणानुयायिनस्तु भरतीति भरतः (मनुः) तस्योऽयं भारतो देशः इति वदन्ति । यथा-

भा- भाति सर्वेषु वेदेषु ।

र- रतिः सर्वेषु जन्तुषु ।

त- तरणं सर्वतीर्थानां तेन भारतमुच्यते । (मत्स्यपुराणम्)

देशोऽयं समग्रेऽपि संसारे विशालतया जनसंख्यया नैतिकबलेन आध्यात्मिकगुणानां समुदायेन च वैशिष्ट्यं भजते । अस्माकं देशस्य परिचयः विष्णुपुराणानुसारम् -

"उत्तरं यत् समुद्रस्य हिमाद्रेश्चैव दक्षिणम् ।
वर्षं तत् भारतं नाम भारती यत्र सन्ततिः"॥ (विष्णुपुराणम्/११३)

**भारतवर्षे संस्कृतभाषा -**

प्रथमतया भाषा का ? इति जिज्ञासायामुच्यते मनुष्यमुखनिः श्रुता वाणी भाषा नाम्ना अभिधीयते । बहुजनानां देशः भवति भारतवर्षम् । भारतवर्षे बहूनां भाषाणां योगः दृश्यते । तासु सर्वासु संस्कृतभाषा सर्वोत्कृष्टा, संस्कारयुक्ता, परिष्कृता भाषा इति सर्वे आमनन्ति । उक्तञ्च- काव्यादर्शे -

- "संस्कृतं नामं दैवी वाक् अन्वाख्याता महर्षिभिः"।(काव्यादर्शः)

**संस्कृतम्-**

सम् उपसर्गपूर्वकात् कृ धातोः क्तप्रत्ययेन संस्कृतम् इति शब्दस्य निष्पतिः समजायते । संस्कृतभाषा भारतीयसंस्कृतेः आत्मा इव राराजते । संस्कृतभाषां विना भारतीयसंस्कृतिः अपूर्णा जाता इति नास्ति सन्देहः। उक्तञ्च महर्षिकपिलमुनिना -

**"सत्याहिंसागुणैः श्रेष्ठा विश्वबन्धुत्वसाक्षिका ।
विश्वशान्तिः सुखधात्री भारतीया हि संस्कृतिः"॥ (सांख्यदर्शनम् ६१)**

**आधुनिकभारतेसंस्कृतशिक्षणस्यआवश्यकता -**

आधुनिकसमाजे नैतिकस्य एवम् आध्यात्मिकस्य ज्ञानवर्द्धनाय, चरित्रनिर्माणाय संस्कृतशिक्षणस्य आवश्यकता वर्त्तते । संस्कृतभाषा भारतस्यैव न, प्रत्युत समग्रजगतः प्रचीनभाषा सांस्कृतिकभाषा च । अस्यामेव

भाषायां वेद-वेदाङ्ग-ब्राह्मण-आरण्यक-उपनिषद्-ज्योतिष-व्याकरण-साहित्य-योग-आयुर्वेद-धर्मशास्त्रादयः ग्रन्थाः प्रणीताः सन्ति । कस्यचिदपि ग्रन्थस्य मूलमध्ययनं तत् प्रणेतुः भाषायामेव भवितुर्महति । अतः उपयुक्तग्रन्थानां मूलाध्ययनाय संस्कृतभाषायाः एव आवश्यकता वर्त्तते।

यदि तेषां ग्रन्थानामध्ययनं क्रमशः परम्परानुगुणञ्च न भवेत् तर्हि एतेषु विद्यमानस्य गभीरज्ञानस्य च लोपः निश्चितः। अस्माद् हेतोः भारते संस्कृतशिक्षणस्य आवश्यकता नूनं विद्यते। संस्कृतवाङ्मये तत् सर्वमस्ति यत् अन्यत्र नास्ति। यत् अत्र नास्ति तत् अन्यत्राऽपि नास्ति। यथोक्तं महाभारते -

**धर्मे च अर्थे च कामे च मोक्षे च भरतर्षभ।**

**यदिहास्ति तदन्यत्र यन्नेहास्ति न तत् क्वचित्"। (महाभारत.१.६२.६३)**

**राष्टियैकतायाः सम्वर्धनार्थं संस्कृतशिक्षणस्य आवश्यकता -**

संस्कृतं संस्कृतेर्मूलमस्ति । भारतीयसंस्कृतिः विश्वस्य प्राचीनतमा संस्कृतिः । संस्कृतेन एव भारतं भारतम् इति आमनन्ति विद्वांसः। आवैदिकयुगादेव भारतम् एकतायाः सूत्रे निबद्धम् आसीत्।

**ऋग्वेदे उल्लेखमस्ति -**

**"अहं राष्टी सङ्गमनि वसनम्।"(ऋग्वेदः वाक् सुक्तम् १०/१२५/३)**

**"अथर्ववेदे" ऋषिः निर्दशति-**

**"माता भूमिः पुत्रोऽहं पृथिव्यां"। (अर्थववेदः पृथ्वीसूक्तम्१२/१/१२**

**"आब्राह्मणः ब्रह्मवर्चसि"** इति वचनमनुसृत्य भारते राष्ट्रैकतायाः संवर्धनाय संस्कृतशिक्षणस्य आवश्यकता वर्त्तते।

**छात्राणां नैतिकविकासार्थं संस्कृतशिक्षणस्य आवश्यकता -**

संस्कृतभाषा वेदव्यास-वाल्मीकि-कालिदासादिमहाकवीनां नैतिकविचारैः पुष्पिता पल्लविता च वर्त्तते। इयं भाषा नैतिकशिक्षायाः प्रमुखं केन्द्रम् इति कथने न काऽपि अतिशयोक्तिः भवेत् । वेदात् आरभ्य पुराणसाहित्यपर्यन्तं कथाग्रन्थात् आरभ्य सुभाषितग्रन्थपर्यन्तं सर्वत्राऽपि नीतिरेव प्रस्तुता वर्तते।

यत्र उपनिषत्सु "**अतिथि देवो भव**"इति "उद्घोषः अस्ति"। (नैति. उप.२/१/१)

यत्र "महाभारते" -

**"वृत्तं यत्नेन संरक्षेदत् वित्तमेति च याति च।**

**अक्षिणो वित्ततः क्षीणो वृत्ततस्तु हतो हतः"॥** (महाभारतम् उद्योग. ३६.३०)

यत्रादर्शपतिः आदर्शपुत्रः आदर्शराजाः प्रजावत्सलश्रीरामः रामायणे उपस्थाप्यते, "यत्र शिवे कथा दुधीये देहत्यागः" परोपकारस्य पराकाष्ठां दर्शयति। यत्र मूर्खपुत्राणां विदग्धसम्पादनं पञ्चतन्त्रस्य विशेषता। "यत्र सहसा विदधीत न क्रियाम्" इति किरातार्जुनीयमहाकाव्यस्य रमणीयता। तत्र नीतिः नैतिकशिक्षा च कथं न भवेत्? अद्य भारते छात्रेषु नैतिकतायाः महान् अभावः विलोक्यते । छात्राणाम् असन्तोषः चरमोत्कर्षं प्राप्तम् अस्ति ।

संङ्गणकयुगस्य प्रादुर्भावात् सामाजिकपरिवर्त्तनकारणात् च छात्रेषु मिथ्यावादिताकला, आक्रामकता अनाचारता स्वार्थपरायणता किं बहुना? अनैतिकताप्रभृतयः अवगुणाः प्राधान्येन दृश्यन्ते । अतः एतेषां दुर्गुणानां कारणात् नैतिकविकासः छात्राणाम् अवरुद्धो जायते । अतः छात्रस्य चारित्रिकोन्नतये संस्कृतस्य शिक्षा अत्यावश्यकी वर्त्तते।

**निष्कर्षः** –

सर्वासां भाषाणां जननीरूपेण संस्कृतभाषा एव सर्वेषां हृदि विराजते । भारतीयसंस्कृतेः उतरोत्तरविकासः भाषामाध्यमेन एव भवितुमर्हति । यदि भाषा नास्ति तर्हि अस्माकं संस्कृतिम् अग्रेसारयितुम् अस्माभिः न शक्यते । यत् सर्वम् अन्यत्र नास्ति तत् सर्वम् अस्याम् भाषायामेव अस्ति इति आलोचकारस्य अभिमतम् । अत्रैव वसुधैव कुटुम्बकम् इति भावना परिलक्ष्यते ।

उक्तञ्च -

**"अयं निजः परो वेति गणना लघुचेतसाम्।**
**उदारचरितानां तु वसुधैव कुटुम्बकम्॥"** (हि.प.१/६९)

अतः छात्राणां शिक्षायाः गुणात्मकमानवर्धनार्थं, राष्ट्रियैकतायाः संवर्धनार्थं संस्कृतभाषायाः ज्ञानम् अपरिहार्यम् । एवं भवति आधुनिकभारते संस्कृतशिक्षणस्य आवश्यकता ।



## नैतिक शिक्षा का महत्व

**अलिभ भोइ,**
SS -I, Roll No. - 03

**भूमिका :-**

शिक्षा वह प्रकाश है जिसके द्वारा मनुष्य को जीवन में कर्त्तव्य औ रअकर्त्तव्य, उचित और अनुचित का ज्ञान होता है । शिक्षाज्ञान और विज्ञान, धर्म और दर्शन, राजनीति और इतिहास, कला तथा संस्कृति को समझने का मार्ग खोलती है । सारा धन दौलत, सुख और वैभव नैतिकता (सच्चरित्रता) पर खड़े हैं । भारत की नैतिकता इतनी ऊँची थी कि सारासंसार अपने - अपने चरित्र के अनुसार शिक्षा प्राप्त करे , ऐसी घोषणा यहा की जाती थीं। आदि काल में भारत संसार का गुरू था । वह सोने की चिड़िया के नाम से पुकारा जाता था । "

# शिक्षाक्षेत्रे असहजता

**इन्दुलक्ष्मी एम् .आर्.,**

SS -I, Roll No. – 49

शिश्राक्षेत्रे विद्यन्ते नैकाः समस्याः । ताः समस्याः सर्वक्रस्य अधिकारजनानां च श्रद्धासु आनेतुं तथा समस्याः परिहर्तुं च प्रबन्धस्यास्य रचनां करोमि ।

साम्प्रतिकप्रसङ्गे मानवजीवने अविभाज्येषु एका भवति शिक्षा । भारतस्य अद्यतनशिक्षाव्यवस्थायां सहस्रवर्षाधिकपुरातनत्वं विद्यते । ज्ञानस्य आदानप्रदानप्रक्रियायाः वेदिका भवति शिक्षाक्षेत्रम् । किन्तु अद्य इदं शिक्षाक्षेत्रम् अनेकाः समस्याः अभिमुखीकरोति । समस्यासु अतिप्रधानं भवति शिक्षायाः वणिक्रिया । धनं दत्वा अध्यापकाः छात्राः च अनर्हस्थानं प्राप्नुवन्ति । अनेन प्रशिक्षिताध्यापकानां च अवसरः नष्टः जायते अपि तु छात्राणां कृते उचितरीत्या विद्यायाः सम्प्रेषणार्थम् अनर्हस्थानं प्राप्नुवतः अध्यापकाः अयोग्याः भवन्ति । एवमेव छात्राणां विषयेऽपि अन्यानां छात्राणाम् अवसरः ते हरन्ति । पाठशालासु अध्यापकानां संख्या न्यूना भवति । अध्यापकाः छात्राणां संख्यानुसृत्य न सन्ति । तत्फलेन छात्राध्यापकयोः अनुपातः 24 :1 भवति, अर्थात् 24 छात्राणां कृते एकः अध्यापकः एव विद्यते । भारते कलालयानां संख्या 38498 भवति किन्तु शिक्षायाः वणिक्क्रिया प्रचाल्यमानेऽस्मिन् काले 18 आरभ्य 23 तम वयः पर्यन्तं युवजनानां संख्यायाः अवलोकनसमये कलालयानां संख्या अपर्याप्तैव । एतस्मात् वयम् अवगन्तुं शक्नुमः यत् एकलक्षच्छात्राणां कृते पठनार्थं केवलं 27 कलालयाः एव विद्यन्ते । इयं गणना माध्यमं भवति, सम्यक् रीत्या अवलोकनं क्रियते चेत् कलालयाः काश्चित् संस्थासु केवलं 7 एव । एतत् कष्टाय भवति । अपि तु सर्वकारैः शिक्षाक्षेत्रस्य आवश्यकतानुसारं प्राधान्यमपि न दीयते । शिक्षाक्षेत्रस्य स्वकार्यवत्करणस्य भागेन गुणान्वितशिक्षा नष्टा जाता । न केवलं गुणरहिता शिक्षा, अपि तु अनियन्त्रितवर्धितशुल्कम् उपवेशनाय अत्यधिकधनव्ययः च क्षेत्रेऽस्मिन् बृहत्समस्या भवति । समयानुसारं परीक्षा, पाठयोजनाभावः पाठनं च प्रचालयितुं काश्चन पाठशाला: असज्जाः भवन्ति । अपि तु समये परीक्षाफलं नागच्छन्ति इत्यपि छात्रेषु बहुक्लेशं जनयति । अनेकासु संस्थासु आङ्गलभाषाम् अध्यापनमाध्यमत्वेन स्वीकुर्वन्ति ।भारतीयपरम्परायाः अप्रचारणाय भवति एतत् । छात्रेषु अध्यापकेषु च आङ्गलभाषायाः प्रावीण्यं नास्ति चेत् शिक्षणप्रक्रिया न सफला भवति इत्यवस्था एव नवीनभारतेषु विद्यते । एतत् क्लेशकरं भवति ।छात्राः पठनकालात् पूर्वं पठनं त्यक्त्वा गच्छन्ति । एतत् अधिकतया अभिभावकानाम् अज्ञानेनैव जायते । केचन कर्मणि शिक्षायै च अन्यराज्येषु गच्छन्ति । भारतीयशिक्षापरम्परायाः प्राधान्ये अनवधानमेव अत्र हेतु: । अनेन प्रधानतया युवकानां बुद्धिः समर्थता, योग्यता आदि अस्माकं नष्टं जातम् । विद्यालये जलं, शौचालयः, विद्युत्, पठनोपकरणमित्यादीनां प्राथमिकसौकर्याणाम् अभावः अत्यधिकं विद्यते । कर्मसाध्यतां प्रयोजनीकर्तुं पर्याप्तं प्रशिक्षणं नास्ति इति युवकानां कृते क्लेशः एव । विद्या सर्वेषां छात्राणाम् अवकाशः एव अतः यस्य धनमस्ति,तस्य शिक्षा अस्ति इति चिन्तनस्य परिवर्तनाय कालः अतीतः । अपि च जाति - वर्ण - लिङ्गभेदेन च

विद्यादानस्थितिः अतिकठिना एव। एते दोषाः कतिपयाः एव। अतः सर्वकारैः शिक्षाक्षेत्राय अत्यधिकं प्रधान्यं दातव्यम्। शिक्षाक्षेत्रे सम्यक् रीत्या शिक्षानीतयः अवश्यकाः एव तदर्थं प्रयत्नं कुर्मः।

**अनुशीलितग्रन्थाः -**

• https://wiki.kssp.in/കേരളത്ത%E 0ലെവദ്യ% B4ഭ്യ%B 4സം - പ%B 5രശ്% A8ങ്ങളും_കട%E 0കളു%B4

● http://www.wikipedia.



## ।। भारतीय शिक्षा व्यवस्था एवं श्रुति परम्परा ।।

**मनीष शर्मा**,

SS -I, Roll No. – 13

भारतवर्ष एवं भारतीय संस्कृति में शिक्षा का प्राचीन काल से ही विशेष महत्त्व चला आ रहा है, इस लिए भारत को प्राचीन काल से विश्वगुरु की ख्याती प्राप्त हुई यहां शिक्षा पर विशेषध्यान दिया जाता रहा है। हमारे यहां बड़े –बड़े प्राचीन एवं अर्वाचीन आचार्यों व शिक्षाशास्त्रियों ने माना कि शिक्षा वह पारस मणि है कि जो भी प्राणी इस पारस मणि के प्रभाव में आता है वह लोहे से स्वर्ण की तरह सामान्य से विशेष हो जाता है। अतः भारत में पहले से ही शिक्षा का स्तर इतना उन्नत रहा है कि यहां मानव शिक्षा, स्त्री शिक्षा बाल शिक्षा के साथ – साथ पशु ओं को भी शिक्षा प्रदान की जाती थी इस का उदाहरण हमारे साहित्यिक ग्रन्थों में भली –भांति प्राप्तकिया जा सकता है। भारतीय शिक्षा का इतना बुनियादी स्तर बना ने में सबसे अधिक महत्त्व पूर्ण योगदान हमारी प्राचीन शिक्षा व्यवस्था ओं एवं हमारी शैक्षिक परम्परा ओं व प्रणालियों का रहा जिस में शिक्षा के द्वारा धर्म अर्थ व काम के साथ –साथ मोक्ष का भी अनुसन्धान किया जा ताथा। प्राचीन भारतीय शैक्षिक व्यवस्था में जीवन के चार आयामों (ब्रह्मचर्य, ग्रहस्थ, वानप्रस्थ और संन्यास) में से सर्व प्रथम आयाम ब्रह्मचर्य में जीवन के १ से २५ वर्ष विद्यार्जन के लिए ही रखे गये। इस में शिष्य गुरुकुल में गुरु जी के सानिध्य में रह कर गुरू की सेवा शुश्रूषा करते हुए गुरु मुख से ही विद्यार्जन करते थे और यहां विशेषता ये थी कि विद्यार्जन के साथ –साथ कला एवं कौशलों व विभिन्न प्रकार की विद्याओं की भी साधना की जाती थी। गुरुकुल जो भारत में शिक्षाप्रदान करने का माध्यम हुआ करते थे। जो सुन्दर एवं सुरम्य वातावरण में। प्रकृति के साथ शाश्वत सम्बन्ध रखते हुए मानव पशु –पक्षियों सभी प्राणि यों में समानता का भाव देखते हुए। गुरुकुलों में श्रुति परम्परा का निर्वहन किया जा ता था। जिस में श्रवण प्रणाली का विशेष महत्त्व होता था। जो तान्त्रिक प्रक्रिया से कम नहीं होती जैसे आधुनिक युग में हम एक यन्त्र विशेष से किसी दूसरे यन्त्र विशेष में अन्तर जाल के माध्यम से ऑंकड़ों (DATA) का स्थानांतरण करते हैं ठीक उसी प्रकार श्रुति परम्परा में गुरु अपने गुरूपरम्परागत ज्ञान को विद्यार्थियों की जरुरतों के अनुसार श्रवणप्रणाली के माध्यम से शिष्यों को प्रदान कर ते थे। परन्तु शिक्षा सदा सामाजिक गुण धर्मों के

अनुसार परिवर्तन शील रही इस लिए समय के साथ –साथ शिक्षा और शिक्षा प्रदान प्रणाली परिवर्तित होती गयीं। मध्यकाल में शिक्षा के स्वरूप में ही परिवर्तन देखने को मिला अब शिक्षा की विशेष राजधानियां बन चुकी थी जैसे की :- काशी, काञ्चि,उज्जयिनी, पाटलिपुत्र,अवन्तिका इत्यादि जहां शिक्षा प्रदान की जाती थी और इस समय में विशिष्ट ज्ञानको स्वर्ण पत्रों , ताम्र पत्रों, व भोज पत्रों पर संयोकर रखा जाने लगा जो मात्र आचार्यो व गुरुओं के उपयोग मात्र था शिष्य लोग अब भी श्रवणप्रणालियों से ही ज्ञान प्राप्त कर ते थे।

यहां से आगे ईसा से कई वर्षों पूर्व ही शिक्षा व्यवस्था में एक विशिष्ट परिवर्तन आया अब शुरुवात हुई विश्वविद्यालयों की इस समय में भारत में विश्व के प्राचीनतम विश्वविद्यालय स्थापित हुए जिस में नालंदा विश्वविद्यालय व तक्षशिला विश्वविद्यालय महत्त्वपूर्ण रहे जिन में पूरे विश्व से छात्र ज्ञान प्राप्ती के लिए आ ते थे। जहां छात्रों की सुलभता के लिए पाठ्य-पुस्तकों व प्रयोगशालाओं का भी प्रयोग किया जाने लगा तब से समय परिवर्तन के साथ –साथ भारत ही नहीं अपि तु पूरे विश्व में ही शिक्षा प्राप्ति के लिए विश्वविद्यालय व विद्यालयव्यवस्था आरम्भ हुई।



## शिक्षाक्षेत्रे स्वास्थ्यसंरक्षणम्

**अपर्णा एस्.बि.,**
SS -I, Roll No. -38

स्वास्थ्यं नाम केवलं रोगस्य अनुपस्थितिःनास्ति । शारीरिक - मानसिक – भौतिक वातावरणस्य च परिपूर्णरूपं भवति । मनुष्यजीवने बहूनि आवश्यकानि वस्तूनि सन्ति । सर्वेषु अपि वस्तुषु सर्वापेक्षया आवश्यकं वस्तु स्वास्थ्यं भवति ।अतः 'शरीरस्य चित्तस्य च निर्विकारास्थितिः एव स्वास्थ्यम् ' इति कथ्यते । राष्ट्रस्य विकासः तस्य नवयुवकानाम् उन्नतिः आश्रित्य वर्त्तते । अतः तेषां स्वास्थ्यं परमप्रधानं भवति । नवयुवकानां निर्माणं राष्ट्रस्य विद्यालयेषु आरभ्यते । अतः विद्यालयस्य परमप्रधानकर्तव्यं भवति बालकानां स्वास्थ्य संरक्षणं – पोषणं च ।

इदानीन्तनकाले विद्यालयेषु छात्राणाम् आरोग्य संरक्षणार्थं महत्वपूर्णाः प्रयासाः कृताः सन्ति । केवलं पठनं पाठनं च नास्ति । बालकानां स्वास्थ्यस्य स्तरं वर्धयितुं निरीक्षकस्य व्यवस्था विद्यालये अस्ति । पोषकाहार - शुद्धजल – शौचालयानां व्यवस्था च अस्ति । भार – उच्चताश्वसनक्रिया इत्यादीनां निरीक्षणं क्रियते । विद्यालये उत्तमवाताावाराणस्य सज्जीकरणम् , एवं रूपेण बहु प्रयत्नशीलाः सन्ति । अधुना विद्यालयेषु योगपरिशीलनम् , व्यायामः इत्यादि कार्यक्रमाः अपि सन्ति ।

**व्यायामः –**

उत्तमस्वास्थ्यस्य अनेकानि साधनानि सन्ति । तेषु व्यायामः अद्वितीयं स्थानम् अर्हति । व्यायामस्य अनेके लाभाः सन्ति । अनेन शरीरपुष्टिः वर्धते, सर्वेषाम् अङ्गानां विकासो भवति , शरीरे वायुसंचारः, रक्तसञ्चारः सम्यक् रूपेण भवति । शरीरस्य रोगेभ्यः रक्षणाय व्यायामः आवश्यकः । अतः विद्यालयेषु क्रीडार्थं मनोरञ्जनार्थञ्च उत्साहवर्धनं करणीयम् । अधुना विद्यालयेषु द्विचक्रिका परिशीलनम् , तरणपरिशीलनम्,

योगपरिशीलनम् , इत्यादि विविधकार्यक्रमाः छात्राणाम् इच्छानुगुणम् , स्तरानुगुणं कृताः सन्ति। यथा व्यायामः आवश्यकः तथा उचित – आहारसेवनमपि आवश्यकम् । चरकसंहितानुसारम् उक्तम् – यदि आहारः उचितोनास्ति तर्हि व्यायामस्य कोउ पयोगः? इति । स्वास्थ्यशरीरस्य द्वे प्रमुखे साधने स्तः उचितव्यायामः उत्तमभोजनञ्च ।

**भोजनम् –**

मानवजीवनस्य भोजनम् आवश्यकं वर्त्तते । भोजनं बालकानां शरीरस्य वृद्धिं वर्धयति। अतः शरीरस्य आवश्यकतानुसारं सन्तुलिताहारः आवश्यकः । उत्तमभोजनाभावे छात्राणां स्वास्थ्यस्योपरि दुष्प्रभावः जायते । अतः विद्यालयः बालकानां पोषकाहारस्य व्यवस्थां कुर्यात् । किञ्चित्बालकानां गृहे तस्य आर्थिकस्थितिम् अनुसृत्य उत्तमभोजनं न मिलति । तेषां पोषकाहारस्य न्यूनता विद्यालये मध्याह्नभोजनेन निवारयितुं शक्यते । तेषां भोजने प्रोटीन्युक्त भोजनस्यापेक्षा वर्त्तते । यथा - दुग्धं - चणकः – फलम् इत्यादि । आधुनिककाले बालकाः सर्वदा फास्टफुड् (fast food) इच्छन्ति । तस्य फलं - ते विविधजीवितशैलीरोगेन पीडिताः सन्ति । अतः बालकानाम् आहारः सन्तुलितः भवेत् । भोजनं शरीरस्यान्तरिकक्रियाः सञ्चालयित्वा नियन्त्रयित्वा च शरीरवृद्धिं स्वास्थ्यस्य सुरक्षां च करोति । भोजनविषये विद्यालयस्य ध्यानं परमावश्यकं वर्तते ।

**शिक्षाक्षेत्रे स्वास्थ्यसंरक्षणम् -**

छात्राणां स्वास्थ्यसंरक्षणे अध्यापकस्य महत्त्वपूर्णमुत्तरदायित्वं वर्त्तते । सः बालकस्य स्वास्थ्यविषये महत्त्वपूर्णकार्यं कर्तुं शक्नुवन्ति । बालकेभ्यः गृहस्य भोजनं विद्यालयस्य मध्याह्नभोजनञ्च सन्तुलितं निर्मातुं व्यवस्थां कुर्यात् । विद्यालयभवनस्य कक्ष्या, शौचालयः, क्रीडाक्षेत्रम् इत्यादयः स्वछाः, अकर्षकाः भवेयुः । तत्र शुद्धवायोः प्रकाशस्य च समीचीना व्यवस्था भवेत् । बालकानां शारीरिकमानसिकविषमतां ज्ञात्वा निरीक्षकैः साहाय्येन विद्यालयेषु उचितव्यवस्था करणीया । कोरोना काले छात्राणाम् मानसिकस्वास्थ्यं समीचीनं नास्ति । अतः छात्राणां हितानुसारं तेषां स्वास्थ्यविषये अध्यापकस्य ध्यानम् आवश्यकम् । अनन्तरं छात्राणां वयानुगुणं , स्तरानुगुणं च विद्यालेयेषु आरोग्य संरक्षणकर्यक्रमाः आवश्यकाः सन्ति । आरम्भकक्ष्यासु सरलव्यायामः भवेत् । उच्चस्तरे कठिनकार्यं शिक्षयेत् । बालकानां स्वस्थ्यजीवनयापनार्थं विद्यालये उचितव्यवस्था भवेत् । विद्यालयेषु छात्राणां मानसिकोल्लासनिमित्तं , शारीरिकक्षमतां वर्धयितुं च निश्चितः समयाः कल्पिताः (P.E.T ) सन्ति । विद्यालयेषु स्वच्छसप्ताहः – स्वच्छभारतमाध्यमेन च बालकेषु सेवा - परिश्रममनोभावस्य संवर्धनं कर्तुं शक्नोति । कोरोणाकाले शारीरिकाभ्यासस्य अवसरः नास्ति । छात्रेषु स्वतन्त्रविकासः न सम्भवति । ते अन्तर्जालस्य पुरतः यन्त्रवत् उपविशन्ति । छात्राणां मानसिकशारीरिकस्वास्थयं न वृद्धिमागात् । अतः अधुनापि शिक्षाक्षेत्रे स्वास्थ्यसंरक्षणस्य आवश्यकता अत्यधिकास्ति । उत्तमसमाजस्य निर्माणार्थं छात्राणां स्वास्थ्य संरक्षणम् अत्यावश्यकम् । स्वास्थ्यरक्षायाः ये ये नियमाः स्वास्थ्यपुस्तकेषु लिखिताः सन्ति तेषां सम्यक्प्रकारेण पालनम् अपि कर्तव्यम् । भविष्ये भारतीयाः सुक्षमाः, सुदृढाः निरामयाः सन्तु इत्यतः क्रीडाप्रकाराणां , व्यायामस्य तथा योगमार्गस्य शिक्षणेन सह समवायः कर्तव्यः इति ।

**" सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः ।**
**सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत् ।। "**



# हिन्दुविधौ नारीणां स्थानम्

**Neelanchala Hota,**
SS- I, Roll No. – 52

प्राचीनकाले नारी यद्यपि पूजनीयाऽसीत्तथापि सा स्वतन्त्रा नासीत्, नापि तस्या दायाधिकारः पुरुष इव प्रशस्त आसीत्। भार्या यध्दनमर्जयति तद्दिने भर्त्ता अधिकारी भवति स्म। प्रसङ्गेऽस्मिन मनुना प्रतिपादितं यत् -

**पिता रक्षति कौमारे भर्ता रक्षति यौवने।**
**पुत्रो रक्षति वार्ध्दक्ये न स्त्री स्वातन्त्र्यमर्हति** ॥
भार्त्ता पुत्रश्च दासश्च त्रय एवाधनाः स्मृताः।
यत्ते समधिगच्छन्ति यस्यो लङत्दद्धनम् ॥ इति॥

पुनश्च तदानीं नारीणां बाल्यविवाहप्रथा – सतीदाहप्रथा प्रभृतीनां प्रचलनदर्शनान्नारीणां स्थितिरतीव दयनीयाऽसीत्। तदानीन्तनसमाजसंरक्षकैः प्रसङ्गेऽस्मिन् विद्रोहं प्रदर्श्य कालक्रमेण नारीणां स्थितिः परिवर्त्तिता।

- आंङ्लशासनकाले 1865 ख्रीष्टाब्दे सतीदाहनप्रथा लुप्ताऽभूत्।
- 1921 ख्रीष्टाब्दे बाल्ये विवाहविधिर्लुप्तः।
- ततः 1956 ख्रीष्टाब्दे हिन्दुविधवानां पुनर्विवाहार्थं विधिरपि प्राचलत्।

कन्यानां विवाहवयः न्यूनातिन्यूनतया पञ्चदशवर्षं सञ्जातम्, पुरूषाणाञ्च न्यूनातिन्यूनतयाऽष्टादशवर्षमिति । विधेरस्योल्लघ्ङनेन दण्डव्यवस्थाऽपि परिकल्पिता । तदनन्तरं कन्यायाः न्यूनातिन्यूनतया अष्टादशवर्षं,वरस्य च वयः एकविंशतिवर्षम भवेदिति निर्धारितम् । तदा हिन्दुविवाहविधिरिति कश्चन विधिरपि 1955 ख्रीष्टाब्दे प्राचलत्। प्राचीनकालेऽपुत्रः पुरुष एव केवलं दत्तकग्रहणेऽधिकारी भवति स्म। नारी तद्भर्त्तुरनुमतिं विना दत्तकग्रहणेऽधिकारिणी नासीत्। किन्तु 1956 ख्रीष्टाब्दे हिन्दुदत्तकविधिः यदा प्राचलत्, तदा स्त्री स्वतन्त्रारूपेण दत्तकग्रहणेऽधिकारिण्यभूत्। पुर्वं हिन्दुपरिवारे नारीणां दायाधिकारो नासीत्। सा केवलं परिवारेण भरणपोषणयोग्याऽसीत् । ऐदं प्राथम्येन 1967 ख्रीष्टाब्दे नारीणां दायाधिकारः हिन्दुविधौ प्राप्तः । प्राचीनधर्मशास्त्रेषु विवाहविषये, उत्तराधिकारविषये, दत्तकविषये च ये विचारा उपन्यस्ताः, यान् विचारांश्चावलम्ब्य सुप्राचीनकालादेव भारतवर्षे परम्परया शिष्टैर्व्यवस्था अनुसृता उपदिष्टाश्चासन् , कालक्रमेण समाजस्य परिवर्त्तनेन सह वैदेशिकशासकानां हस्तक्षेपेण च तासां व्यवस्थानामपि परिवर्त्तनं जातम् । परिस्थित्यनुसारेण समाजस्य सांस्कृतिकं, राजनीतिकमार्थनीतिकं च परिवर्त्तनं युगे युगे दृश्यते । मनु-याज्ञवल्क्यादिभिर्मुनिभिः लोकोपकाराय प्रणीताः नियमाः समाजस्य शृङ्खलायै कल्प्यन्ते स्म । परन्तु कालक्रमेण तथा कथित-समाजसंस्कारकैः प्राचीननियमानां कठोरतामभिप्रेत्य तेषां शिथिलीकरणाय प्रचेष्टा प्रचालिता । वैदेशिकैः शासकैश्च तेषां प्राचीननियमानां बहुषु स्थलेषु परिवर्त्तनं कृत्वा विधिशास्त्रसहायेन आधुनिकहिन्दुविधिः परिकल्पितः। तथा सति प्राचीनमौलवादस्य कौलिकप्रथायाः पारिवारिकरक्षणशीलताश्च लोपः सञ्जाताः। नारीणां हीनवर्णानाञ्च समाजेऽधिकारविशेषाः प्रापिताः । शासकाः स्वसौविध्यार्थमनेकान् नियमानपि प्रणीतवन्तः। एकेन शासकेन प्रणीतस्य नियमस्य परिवर्त्तनमपि कृतम्, एतेन प्रणीताधुनिके हिन्दुविधिः प्राचीनधर्मशास्त्रनियमान् बहुषु स्थलेषु व्यर्थीचकार। अतः सम्प्रति दृश्यते लोकोपकारिण्यः प्रथाः। यया स्त्रियः संरक्षिताः सम्निताश्च।



# शिक्षाक्षेत्रे वर्तमानावश्यकता

**Ritanjali Nayak**,
SS -I, Roll No. – 54

सृष्टि विचित्रा, सुमहती श्रेष्ठा च । विधातुः अमृतसन्तानं भवति मानवः । मानवः एकः सामाजिकप्राणी अस्ति । समस्तसृष्टेः सर्वोत्कृष्टः यस्याः परं किमपि उन्नता कापि अन्या न भवति । मानवः स्वयं हृदि दिव्यज्ञानं दृष्ट्वा, स्वयं भगवान् स्वयं वैचारिक - नैतिक - बौद्धिक - चारित्रिक - मानविकदक्षतायाः पूर्णप्रकाशं क्रियमाणो दृश्यते । शिक्षया विना मानव अपूर्णः जायते । शिक्षिताः मानवाः विवेकानुमोदितानि कार्याणि साधयितुं सर्वथा सुदक्षाः भवन्ति । परन्तु सम्प्रतिशिक्षाव्यवस्था सम्पूर्णा शोचनीया अस्ति ।

शिक्षा व्यवस्थायाः सूचनियतां प्रति बहुविधानि कारणानि सन्ति । येषु कारणेषु सम्प्रतिमुख्यरुपेण प्रतिबन्धकतां जनयति विश्वे महामारि कोरोना । २०१९ तमे चीन् देशतः आगता महामारि कोरोना विषाणुः सर्वेषां जीवने दुःखम् अददात् । बहूनां जनानां मृत्यु अपि अभवत् । अयं विषाणुः विशेषतया छात्राणां शिक्षाक्षेत्रे बह्व्यः समस्या अजनयत् । परन्तु इयं प्रक्रिया सर्वस्मिन् स्थाने सफलं नैव भवति, कारणानि अलेकानि सन्ति । कुत्र चित् अन्तर्जालप्रक्रिया सफलरुपेणचलति, कुत्र चित् न चलति । अतः सर्वकारेण एतस्याः समस्याः उपरिविशेषश्रद्धा दातव्या वर्तते । सर्वकारः अस्मिन् समये कथं Online माध्यमेन शिक्षादानप्रक्रियां सम्यक् रूपेण प्रचालयति इति ज्ञेयमस्ति । यदि ज्ञातुम् इच्छन्ति तर्हि आवश्यकरूपेण शिक्षायाम् आगतानानां समस्यानां समाधानं भवति, सर्वेभ्यः छात्रेभ्यः अन्तर्जालसुविधा प्रकल्पयेत् । येन विना अधिगमप्रक्रिया सफलतां न आप्नोति । अन्तर्जाले नाना समस्याः उत्पद्यन्ते । अन्तर्जालं निम्नसंख्याकेभ्यः छात्रेभ्यः सकाशे अस्ति , अधिकसंख्याच्छात्राणां पार्श्वे नास्ति । अन्तर्जालं येषां छात्राणां पार्श्वे अस्ति, ते पठन्ति , येषां पार्श्वे नास्ति ते नैव पठितुं नैव शक्येरन् । कुत्र चित् केषाञ्चन छात्राणां पार्श्वे दूरवाणि अस्ति चेदपि , ते नैव पठन्ति । एवम् अस्तव्यस्थता अस्ति । परन्तु अस्याः अन्तर्जालप्रक्रियायाः उपयोगिताऽपि अस्ति । लक्षाधिकच्छात्राः गृहे एव स्थित्वा शिक्षायाः ग्रहणं कुर्वन्ति । येन उत्तमच्छात्राः पुरोभिवृद्धिं सम्पादयित्त्वा जीवने लक्ष्यं सम्मुखीकुर्वन्ति । शिक्षया वाञ्छिताः छात्रा: आगामिनि काले किं करिष्यन्ति इति सैव चिन्तनीयः विषयोऽस्ति । एवं प्रकारेण नाना शिक्षाशाखासु सम्प्रतिबाधाप्राप्ता, शिक्षा सम्यक् रुपेण न प्रचलति कुत्र चित् । अन्तर्जालस्य सदुपयोगेन सुपरिणामाः जायन्ते । दरुपयोगेन दुष्परिणामाः श्चानुभूयन्ते ।



# सङ्गणकशिक्षा

**Priyanka Panda,**
SS -II, Roll No. – 10

आङ्गलभाषायाः Computer शब्दस्य शाब्दिकः अर्थः भवति संगणकम् अथवा गणनाकारः । दूरदर्शनस्य आविष्कारानन्तरं वैज्ञानिकाः जटिलतमगाणितीयकार्यस्याध्ययनम् आरब्धवन्तः । गणनानिमित्तं मानवः संगणकं मानवमस्तिष्कवत् आविष्कृतवान् । प्रारम्भे कंप्यूटर्द्वारा २/१८ अकंस्य ३०० तः ४०० पर्यन्तं गणना भवति स्म । परन्तु अधुना नवीनतम तीव्रप्रोसेसिंग्सूपर्सङ्गणकं भवति। तदा कप्यूटर् द्वारा एकसहस्रम् तः अपि अधिका गणना भवति।

**सङ्गणकशिक्षायाः प्रसारः -**

संगणकम् एकं यन्त्रं भवति। तत् अत्यधिकतीव्रगतिद्वारा विद्युत् इलैक्ट्रॉनिकद्वारा साख्यिकी प्रोसेसिंग् भवति। तस्य गतिः भवति माइक्रोसेकेण्ड। जटिलयान्त्रिकाः संरचना सूक्ष्मकार्यसिद्धान्तस्य उपरि आधारिताः भवन्ति। तस्मात् कारणात्संगणकस्य प्रयोगः शिक्षायामपि प्रविष्टः।अस्याः संगणकशिक्षायाः प्रत्येकं देशे प्रसारः अभवत् । संगणकेन सह भिन्न-भिन्नभाषायाः मुद्रण-ध्वनि-सम्प्रेषणं – शब्दभंडारः प्रत्यक्षचित्रं च संयोजनेन कष्टसाध्यं कार्यं सरलतया भवति। संगणकज्ञानस्यास्य शिक्षायाः क्षेत्रेपि नाना रूपेण प्रसारः अनिवार्यः अभवत्। एवं च प्राथमिकविद्यालयः तः विश्वविद्यालयपर्यन्तं संगणकशिक्षणं, प्रशिक्षणञ्चभिन्नभिन्नस्तरीयपाठ्यक्रमेषु सुष्ठु प्रचलति।

**संगणकव्यवहारः -**

संगणकस्य सामान्यः प्रयोगः प्रायतः सर्वे जनाः जानन्ति एव। परन्तु संगणकशिक्षां प्राप्तवन्तः जनाः तस्य भिन्नप्रकारेण व्यवहरन्ति । संगणकमध्ये दूरदर्शनं चलति, एफ्एम्प्रतलति, दूरसंचारस्य प्रसारः भवति, अन्तर्जालद्वारा ई-मेल्चालनं, भाष्पीययानस्य चीटिका वितरणम्, आरक्षणम्, दूरसंवेदी उपकरणस्य संचालनं, परमाणु आयुधस्य निर्माणं, चलचित्रनिर्माणं, जटिलयन्त्रस्य पर्यवेक्षणव्यवस्थापनं, समाचारपत्र- पुस्तकं च मुद्रणं, जलं, विद्युत्दूरभाषायाः रुप्यकाणां समर्पणम् , परीक्षापरिणामस्य संगठनप्रतिफलने संगणकपयोगः भवति सुतराम्। गृहस्य निर्माणे अपि च बहु विशेषमहत्त्वं नाना कार्येषु च भवति।

**संगणकशिक्षायाः लाभः -**

संगणकशिक्षायाः विभिन्नोपयोगिताः दृश्यन्ते । इदं सर्वं संगणकशिक्षाद्वारा सम्भवं भवति । संगणकशिक्षया जटिलतमप्रश्नाः तथा समस्याश्च समाधीयन्ते। व्यवसायिकक्षेत्रे सफलता निमित्तं संगणकज्ञानस्य आवश्यकता महती वर्तते । अधुना दूरस्थशिक्षायामपि अन्तर्जालशिक्षा एव प्रचलति । फलतः

